अखिलभारतीय–प्राच्यविद्यासम्मेलनम्

शतवर्षमहोत्सवग्रन्थमाला–११

श्रीदेवनाथठक्कुरकृता

# अधिकरणकौमुदी

(पुनर्मुद्रणम्)

## मीमांसाशास्त्रम्

प्रधानसंपादकः

आचार्यः श्रीनिवासः वरखेडी

कुलगुरु

संपादकः

आचार्यः मधुसूदनः पेन्ना

संचालकः संशोधन–प्रकाशनविभागः



राष्ट्रहिताय संस्कृतम्

कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः

रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)

तथा

न्यू भारतीय बुक कॉर्पोरेशन, नव देहली

2020

अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला - 11

श्रीदेवनाथठक्कुरकृता

# अधिकरणकौमुदी

मीमांसाशास्त्रम्

(पुनर्मुद्रणम्)


प्रधानसंपादकः

आचार्यः श्रीनिवासः वरखेडी

कुलगुरु

संपादकः

आचार्यः मधुसूदनः पेन्ना

संचालकः संशोधन–प्रकाशनविभागः




राष्ट्रहिताय संस्कृतम्


कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः

रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)





**2020**

शीर्षकम् — अधिकरणकौमुदी

लेखकः — श्रीदेवनाथठक्कुरः

प्रधानसंपादकः — आचार्यः श्रीनिवासः वरखेडी
कुलगुरु, क.का.सं.वि., रामटेकम्

संपादकः — आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन—प्रकाशनविभागः
क.का.सं.वि., रामटेकम्

अखिलभारतीय—प्राच्यविद्यासम्मेलनम् — प्रो. गौतमः पटेल, अध्यक्षः
प्रो. सरोजा भाटे, सचिवा
प्रो. गणेशः थिटे, उपाध्यक्षः

संपादकमण्डलम् — डॉ. दिनकर मराठे, क.का.सं.वि., रामटेक
डॉ. वीणा गानु, नागपुर.

प्रकाशनवर्षम् — **2020**

आवृत्तिः — प्रथमा

मूल्यम् — **185.00**

आय.एस.बी.एन. — 978-8183-153-775

मुखपृष्ठम् — श्री. उमेश पाटील, क.का.सं.वि., रामटेकम्

मुद्रकः — एस.के.प्रिन्टर्स, दिल्ली

प्रकाशकः — कुलसचिवः,
कविकुलगुरु—कालिदास—संस्कृत—विश्वविद्यालयः,
प्रशासकीयभवनम्, मौदामार्गस्य, रामटेकम्.

तथा

न्यु भारतीय बुक कार्पोरेशन, नवी दिल्ली

## PREFACE

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success. My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

सरस्वती श्रुतिमहती महीयताम्

Ramtek
10th January 2020

Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU

## Kavikulaguru Kalidas Sanskrit University
## All India Oriental Conference

**100th Year 50th Session**
**10th-12th January, 2020**

### Chief Patron
Hon'ble Nitin Gadkari
Minister of Road, Transport & Highways of India

### Patron
Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU, Ramtek

### AIOC President
Prof. Gautam Patel
Chairman, Sanskrit Seva Samiti, Ahmedabad.

### AIOC General Secretary
Prof. Saroja Bhate
Professor of Sanskrit (Retd.), Pune University, Pune

### AIOC Local Secretary
Prof. Penna Madhusudan
Dean, KKSU, Ramtek

### Additional Local Secretary
Dr. Harekrishna Agasti
Dr. Kalapini Agasti
Dr. Dinakar Marathe
Dr. Parag Joshi

### Organising Committee
Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek
Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Srinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

श्रीगणेशाय नमः ।

पुराणमजरं देवं कामदं कामवैरिणम् ।
अनिदानं निदानं तं योगिने भोगिनं नुमः ॥ १ ॥
आस्ते देव ! स्मरपरवशस्मेरतारुण्यनृत्य-
स्प्रौढोत्तुङ्गस्तनभरनमत्कामिनीकामकेलिः ।
युष्मत्सेवापरवशमनाः किं जगन्नाथ तावद्
भावी भावश्चरणकमले तावके मामकीनः ॥ २ ॥
धर्मशास्त्राधिकरणं विचारेषूपकारकम् ।
विदुषा देवनाथेन निर्बन्धेन निबध्यते ॥ ३ ॥
परिसङ्ख्यानियमयोस्तथा विध्यनुवादयोः ।
भेदकं कथ्यते सम्यक् पर्युदासनिषेधयोः ॥ ४ ॥
प्रसङ्गतन्त्रयोर्भेदस्तत्साहित्यसहत्वयोः ।
श्रुतिलिङ्गादिभेदश्च तेषामेव बलाऽबलम् ॥ ५ ॥
विधिश्च बाधसापेक्षः प्रतिप्रसववद्भवेत् ।
व्यवस्थितविकल्पश्च षोडशिग्रहणादिवत् ॥ ६ ॥
ऐच्छिकेऽण्टविधो दोषो योगसिद्धिनिरुपणम् ।
तिर्यग्दर्व्वीपरिषदो वेदो वेति गिरा गिरा ॥ ७ ॥
अक्ताऽधिकरणं तद्वत् फलं चमसमेव यत् ।
अर्थवादविशेषश्च तथा वैषम्यमेतयोः ॥ ८ ॥
अश्रुतौ तु समो भागः पशुनामञ्जनादिकम् ।

विशेषो वैकृतस्तद्वद् गृहमेधिविधौ भवेत् ॥९ ॥
पाशाधिकरणं तद्वत्तथा वंक्रिषु वाजिनः ।
सर्वशक्तिः कपालानि गवामयनमेव यत् ॥१० ॥
निषादस्थपतौ बीजं हविषामुभयत्ववत् ।
अपेक्षितविधिस्तद्वद् विश्वजित्फलकल्पनम् ॥११ ॥
अर्थवादाद्विधिः क्वाऽपि तदाद्यन्तापकर्षवत् ।
पशूपाकरणं तद्वद्विधिरङ्गमुखेन यत् ॥ १२ ॥
सर्वशाखाप्रत्ययश्च प्रायणोदयनीयवत् ।
श्रुतिस्मृतिविरोधश्च रात्रिसत्रं कपिञ्जलः ॥ १३ ॥
वाक्यभेदोऽपि कल्प्येत सूक्तवाकादिवत् क्वचित् ।
कर्मण्यारम्भसिद्धान्तस्तपदाहवनीयवत् ॥ १४ ॥
खले वाली भवेद्यूपस्तथैवानुक्रमेण यत् ॥
तथैव चारुणान्यायः पदपांशुववेचनम् ॥ १६ ॥
सामान्यस्य विशेषाक्तौ क्वचित्तत्परता भवेत् ।
पुनरप्याश्रयिन्यायः शंयोरपि विवेचनम् ॥ १६ ॥
ऋत्विग्भ्यश्च प्रतिनिधेर्विशेषः शास्त्रदेशितः ।
तथैवाऽभ्युदितेऽष्टौ यद्यश्चाग्नेयीपदे भवेत् ॥१७ ॥
क्रमाऽधिकरणं तद्वद्देवतात्वविवेचनम् ।
विशेषाणामनन्तत्वात्सामान्यविधिकल्पनम् ॥१८ ॥
सत्राऽधिकरणं तद्वदधिकारबलाबलम् ।
संयोगस्य पृथक्त्वेन नानारूपं भवेत्क्वचित् ॥१९ ॥

**गौणमुख्याधिकरणं यो यद्भक्तः स तद्बलात्।**
**गुणलोपेन मुख्यस्य लोपो भवति कुत्रचित् ॥२० ॥**
**आरम्भणीयेष्टिनयो वाजिनेष्वपचारवत् ॥**
**आश्विनग्रहवत्किञ्चिद्विनियुक्तविरोधवत् ॥२१ ॥**
**नाऽतिदेशः क्वचिद्बाध्यः स्तुतशस्तनयः क्वचित् ॥**
**शिष्टाकोपादिकं तत्तत्प्रसङ्गेन क्वचित् क्वचित् ॥२२ ॥**
**स्फयाश्लिष्टे ज्याधिकरणं वक्षसुत्रविरोधयुक्।**
**निबद्धं यन्निबन्धेषु मीमांसासारवेदिभिः ॥२३ ॥**
**निगूढाक्षरयागेन तत्स्वरूपं निरूप्यते ॥२४ ॥**

ननु निबन्धारो निबन्धेष्वधिकरणविरोधेन तावदितस्ततः प्रत्यवतिष्ठन्ते। तत्राधिकरणं मीमांसासिद्धान्तः। स च न वेदवद्बोधकः, युक्तिशास्त्रत्वात्। युक्तिमूलत्वे चाधिकरणस्याकिञ्चित्करत्वम्; तद्धेतोरिति न्यायात्, सर्वेषां चाऽधिकरणानां लाघवविरोधविनिगमकाऽभावादिष्वेव विश्रामात्। ते चाऽऽत्माश्रयोऽन्याऽन्याश्रयचक्रकाऽनवस्थाव्याघातप्रतिबन्दीविनगमनाचिरहोत्सर्गानौचितीकल्पनालाघवगौरवादयः।

तत्र स्वापेक्षत्वमात्माश्रयः। अन्योन्यापेक्षत्वमन्योन्याश्रयः। तदेवान्तरितं चक्रकम्। उपपाद्योपपादकयोरविश्रान्तिरनवस्था। विरुद्धसमुच्चयो व्याघातः। स्वस्वीकृतदोषसाम्यं प्रतिबन्दी। वैकल्पिके वस्तुन्यवधारणाऽशक्तिरविनिगमः। बाहुल्यदृष्टस्य बलवत्त्वमुत्सर्गः। लोकमर्यादाऽतिक्रमोऽनौचिती।

सुगमाऽसुगमयोः सुगमे बलवत्वं लाघवम्। तद्विपरीतं गौरवं

चेति तर्काः। परेषाम् अत्रैव प्रवेशात् तेषां च सर्वतन्त्रसाधारण्यात्। किञ्चैवं तार्किकसिद्धान्तविरोधोऽपि कथं दोषो न स्याद्धिकरणविरोधवदविशेषात्।

ननु मीमांसाया धर्मविचार एवाऽधिकारस्तेन तदुक्तक्रमणैव तत्त्वाऽवधारणम्। तदुक्तम्- 'तत्र तत्त्वमभियोगात्स्यात्'। उक्तं च-

**अभियुक्ताश्च ये यत्र यन्निबन्धप्रयोजनाः।**
**तत्रत्यगुणदोषाणां ज्ञाने तेऽधिकृता मताः॥**

इति चेन्न। तर्कस्याऽपि तत्रैवाधिकारात् लाघवगौरवयोरेव सर्वविचारमूलत्वात्। उक्तं च-

**आर्षं धर्मोपदेशं च वेदशास्त्राऽविरोधिना।**
**यस्तर्केणऽनुसन्धत्ते स धर्मं वेद नेतरः॥**

किञ्चोक्तमान्वीक्षिकीनिरूपणे--

**प्रदीपः सर्वविद्यानामाधा[1]रः सर्वकर्मणाम्।**
**आश्रयः सर्वविद्यानां विद्योद्देशे प्रकीर्तिता॥**

एवं चाऽधिकरणोपदर्शनमकिञ्चित्करमिति चेदुच्यते- यद्यपि मीमांस-तर्कयोर्द्वयोरपि धर्मोपयोगित्वं, तथापि तर्के तदानुपङ्गिकं, वेदार्थविचा-राप्रवृत्तत्वात्। मीमांसा तु तदभियुक्तैव तदर्थमेव तदवतारात्। यागा[2]दिस्वरूपतिकर्तव्यताद्वारफलनिरूपणार्थत्वात्। अथातो धर्मजिज्ञासेति प्रथमं प्रतिज्ञानात्।

[1]उपाय इति पाठान्तरम्।



[2]पुस्तकान्तरे नास्ति।

तदुक्तम् –

**धर्मे प्रतीयमाने तु वेदेन करुणात्मना ।**

इतिकर्त्तव्यताभागं मीमांसा पूरयिष्यति ।

एवं चाऽभियुक्तप्रामाणिकसंवादार्थमधिकरणोद्भावनम् । तद्विसंवादार्थे तद्विरोधोद्भावनमिति न किञ्चिदेतत् । यदि त्वधिकरणं तर्कविरुद्धं तदा न तदादरोऽपि युक्तिशास्त्रत्वात् । अन्यथा गुरुमतभट्टमतयोर्विरोधेऽनध्यवसायप्रसङ्गात् द्वयोरपि तदाभियुक्तत्वात् । तद्यथा - "स्वाध्यायोऽध्येतव्यः' इति विधेः स्वातन्त्र्यमध्ययनाऽपूर्वमेवोद्देश्यमर्थज्ञानं चार्थबललभ्यमिति गुरुचरणाः । परतन्त्रो विधिरर्थज्ञानमनुष्ठानं च द्वयोरपि विध्युद्देश्यत्वमिति भट्टचरणाः । एवं चारम्भणीयेष्टेरङ्गत्वमिति भट्टचरणाः । प्रधानत्वमिति गुरुचरणाः ।

मनुः—

**वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ॥**

**आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥**

विधिर्विधेयस्तर्कश्च वेदस्तर्को मीमांसा, तदुक्तं भट्टपादेन-

**मीमांसासञ्ज्ञकस्तर्कः सर्ववेदसमुद्भवः ।**

सोऽतो वेदो रुमाप्राप्तकाष्ठाम्बुलवणात्मवत् । रुमा लवणाकरः । अखिलो विधिनिषेधात्मेति कल्पतरुः । अखिलः समस्तो भागान्तराणामपि तत्परत्वादिति नारायणः । चतुर्विध इति तत्त्वम् । अथर्वणोऽपि तदुपदेशकत्वात् । वेदाश्चत्वारः ऋग्य-

जुःसामाऽथर्वणरूपाः । तत्त्वं चाऽदृष्टार्थकानादिवाक्यत्वम्, तादृशेश्वरवाक्यत्वं वा । तत्र विवक्षितच्छन्दस्कं तादृशवाक्यमृक् । अविवक्षितच्छन्दस्कं तद्यजुः । विवक्षितगानं साम । अदृष्टद्वारा दृष्टफलकमाथर्वणम् ।

स च द्विविधो मन्त्रब्राह्मणभेदात् । उक्तं च- 'मन्त्रब्राह्मणयोर्वेदः' इति । मन्त्रपदं च पारिभाषिकं धात्वादिवत् । तत्त्वेन याज्ञिकप्रसिद्धिसिद्धत्वं वा तत्त्वम् । तदन्यत्वं ब्राह्मणत्वम् । ब्राह्मणोऽपि द्वेधा । विध्यर्थवादभेदात् । हेत्वादि तद्बोधकम् । उक्तं च-

**हेतुर्निर्वचनं निन्दाप्रंशसा संशयो विधिः ।**
**परक्रिया पुराकल्पो व्यवधारणकल्पना ॥**

मन्त्रभागे च तदभावात् । अनुवादश्चार्थविशेष एव प्रयोजनाऽपेक्षिणः पुनरभिधानस्यैव तत्त्वात् । अन्यथा तत्तृतीयत्वापातात् ।

स्मृतिश्च ऋषिप्रणीतं धर्मशास्त्रम् । सा च दृष्टार्थाऽदृष्टार्था दृष्टा-दृष्टार्था च । तत्राऽऽद्या नरपतीनां यानासनादिस्मृतिः दृष्टप्रयोजनाऽपेक्षितत्वात् । अदृष्टार्था 'सन्ध्यामुपासीत' 'न कलञ्जं भक्षयेत्' इत्यादि । क्वचिदुभयार्था यथा-'पालाशं दण्डं धारयेत्' इत्यादिः । शीलं मनूक्तम्-

**अद्रोहश्चैव भूतानां कर्मणा मनसा गिरा ।**
**अनुग्रहश्च ज्ञानं च शीलमित्यभिधीयते ॥**

एवं च रागद्वेषपरिहारः शीलमिति प्राञ्चः ।आचारे वेदविदां चित्तस्य स्वभावप्रवणोच्छ्रेति नारायणः । आचारविशेषएव 
तदिति नवीनाः । आत्मतुष्टिरनेकपक्षोपनिपातेऽन्यतरस्मिन् म-

नःसन्तोष इति हलायुधः । वैकल्पिकेऽर्थे स्वेच्छैव नियामिकेति मिताक्षराकारः । तदुक्तम्-

**एतेन वैदिकाऽनेकधर्मधीसंस्कृतात्मनाम् ।**
**आत्मतुष्टेः प्रमाणत्वं सिद्धं धर्मप्रसिद्धये ॥ इति ।**

तत्र-

**विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।**
**तत्र चाऽन्यत्र च प्राप्तौ परिसङ्ख्यानमुच्यते ।**

कथमप्यप्राप्तौ विधिः अज्ञातज्ञापनस्यैव तदर्थत्वात् । यथा- 'सोमेन यजेत' अत्र यागस्याऽप्राप्तवात् । पाक्षिके लाभे नियमः एकदेशे तदङ्गत्वानेयामकत्वात् । प्राप्तैकदेशेनेतिकर्त्तव्यतापूरणस्यैव नियमपदार्थत्वात् । यथा 'याजनाऽध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेत्' इत्यत्र धनार्जनेषु सामान्यतः परस्परौदासीन्येन कृषिवाणिज्यादीनामङ्गत्वं प्रसक्तम् । एकोपायसम्बन्धे उपायान्तराकाङ्क्षाविरहात् । तत्र श्रुतेर्याजनादीनामङ्गत्वबोधनंवाक्यार्थः । तत्सम्बन्धबोधपरत्वात् अर्थादितरत्र निषेधलाभाच्च । 'ऋतावुपेया' दित्यादाप्येवमेव तत् । समुच्चितनानाप्राप्तौ परिसङ्ख्या । यथा-'पञ्चपञ्चनखान् भक्षयेत् तत्र पञ्चनखतदन्यमांसभक्षणयोः समुञ्चितयोरेव रुचिभेदेन प्रसक्तावितरनिषेधः परिसङ्ख्यानं वाक्यार्थः ।अतएव पदार्थपरित्यागोऽपदार्थकल्पनमभावविधिश्चेति परिसङ्ख्यायां दोषाः ।

ननु परिसङ्ख्यायमितरनिषेधवाक्यार्थौ नियमे तु तथा नेति किं विनिगमकम्. अन्यथा शशकादातिरिक्तानां मांसभक्षणनि-

षेधवत् कृष्वादिना धनार्जननिषेधस्याऽलाभे तद्धेतुकं धनाऽर्जननमनिषिद्धमेव स्यादिति चेन्मैवम्। बलवदनिष्टाऽननुबन्धि धनाऽर्जने याजनाद्युपायत्रयसम्बन्ध नियमे ज्ञाते यत्र तत्सम्बन्धाऽभावस्तत्र तादृशेष्टसाधनत्वाऽभाव इति व्याप्तिबलात्तादृशोपायसम्बन्धाऽभावादेव कृष्यादौ बलवदनिष्ठाऽननुबन्धीष्टसाधनत्वाऽभावाऽवगमसम्भवात्। न चैतादृशव्याप्तिबोध एव कथमिति वाच्यम्। व्युत्पत्तिबलेन तत्सम्भवात् धूमवान् वह्निमानितिवदुद्देश्यविधेयभावसत्त्वात्।

ननु-

**यच्छद्बयोगः प्राथम्यं भवेदुद्देश्यलक्षणम्।**
**तच्छद्ब एवकारश्च स्यादुपादेयलक्षणम् ॥**

इति कथं तदिति चेन्न। उद्देश्य एव यच्छब्द इत्येवं योगपरत्वात्। न तु तेन विना नोद्देश्यत्वं, मानाऽभावात्। प्रकृते तु न तथा, बलवदनिष्टाऽननु बन्धिभक्षणे पञ्चनखमांससम्बन्धाऽवगमेऽपि तदन्यमांसभक्षणे शशकादिमांससम्बन्धाऽभावेन लिङ्गेन तादृशेष्टसाधनत्वाऽभावाऽवगमासम्भवात् शशकादिभिन्नमांसभक्षणे शशकादिमांससम्बन्धाऽभावस्याऽसिद्धत्वात्। तत्तदितरघटितैकपिण्डकभोजनसम्भवात्। न चाऽत्राऽपि तत्तदितरोपायाभ्यामेकं धनाऽर्जनमसम्भवात्। सेवादिकं पुरस्कृत्य प्रतिग्रहदाने दानस्यैवाऽसम्भवात् धर्मोद्देशेन त्यागाऽभावात् मांद्वयभोजनाऽनुकूलकृत्यैक्यवत्तदुभयाऽनुकूलकृत्यैक्यस्याऽसम्भवाच्च, तस्य चात्र विवक्षितत्वात्। किं बहुना

'ऋतावुपेया' दित्यत्र ऋतुकालतदन्यकालगमनयोरकदा सर्वथैवाऽसम्भवात्। न च तत्र परिसङ्ख्यैव 'ऋतौ नोपैति यो भार्यामनृतौ यश्च गच्छती'त्यनेन ऋतानुपगमनेऽपि पापबोधनेन तदसम्भवात्। नन्वेवं व्रीहियवयोरपि नियमविधिर्न स्यात्। तयोः समुच्चयसम्भवादिति चेन्न। विकल्पे द्वयोरशास्त्रार्थत्वेनैकस्मिन् फलेऽन्वयाऽसम्भवात्। वस्तुतो व्यवस्थिते नियमपरिसङ्ख्याभेदे तत्र तत्र तदभावेऽपि क्षतेरभावात् इति सिद्धान्तकौमुद्यां विस्तरः। याजनादितदन्यवृत्तीनां समुच्चयाऽसम्भवात् विकल्पेन हेतुत्वम्! एवं च याजनादिसम्बन्धे धनाऽर्जनस्य शब्दादवगते तदुपायान्तरसम्बन्धाऽभावोऽर्थादवगम्यते विकल्पे परस्परान्वयायोगात्। परिसङ्ख्यायां तु न तथाऽवगमः समुच्चयसम्भवात्। शशशुनोर्मांसैर्मिलितस्यैकपिण्डस्य भोजनसम्भवात्। तदवश्यं वाक्यार्थ एव व्यवच्छेदः गत्यन्तराऽभावात्। न चाऽन्नप्राशने 'वाक्प्रसरणकामस्य भार-द्वाजीमांसेने' त्यत्राऽपि परिसङ्ख्यापत्तिः स्यादिति वाच्यम्। तत्र तत्फलोपाधिसम्बन्धेन विधेरेव स्वीकारात्। फलोपदेशमन्तरेण परिसङ्ख्यास्वीकारादितिप्रायः। यत्र साधारणरूपेणोपस्थितौ मध्ये कस्यचिन्निषेधः कस्यचिदन्वयस्तत्र परिसङ्ख्या। पञ्चनखत्वेनैवोपस्थितानां शशकादीनामन्वयादितरेषां व्यवच्छेदात्। नियमे तु नैवमति कश्चित्।

विधिश्चाऽज्ञातज्ञापको वेदभागः, स च सामान्यतश्चतुर्धा उत्पत्तिविधिर्नियोगविधिरितिकर्त्तव्यताविधिराधिकारिविधिश्च। तत्रोत्पत्तिविधिर्द्धर्मिज्ञापकः। द्रव्यदेवतासम्बन्धस्योत्प-

त्तित्वात्। अज्ञातज्ञापनमुत्पत्तिर्विशिष्टविधिरिति कश्चत्। विनियोगः शेषत्वमङ्गत्वमितियावत्। इतिकर्तव्यता अङ्गानां प्रयोगक्रम इति यावत्। कर्मफलसम्बन्धबोधनमधिकारविधिः कर्तृविशेषविधिरिति यावत्। विशेषतश्च विधिरनेकधा। क्वचिद्विशेष्यविधिः यथा-उद्भिदा यजेत। क्वचिदन्यव्यवच्छेदकतद्विधिः। यथा - 'आधारमाघारयति'। तत्राऽतिदेशबलादेवाऽऽघारादिलाभे पुनस्तदुपादानादाज्यभागादिसकलस्थानीयत्वमाधारस्य कल्प्यते गत्यन्तराऽभावात्। अर्थादेतनवगम्यते न तु शब्दात् व्यवच्छेदस्य शाब्दत्वे परिसङ्ख्यापातात्। क्वचित्सम्बन्धविधिः यथा- ऐन्द्रं दधि भवत्यमावास्यायाम्। क्वचिद्गुणरूपदेशविधिः, यथा-सिताऽसितेस्नायात्। तत्र स्नानद्वयस्य नित्यवत्प्राप्तत्वेन विशिष्टविध्यसम्भवात् गौरवाच्च।' अत एव बहुस्नानाऽनाचरणं प्रापकाऽभावात्। यदि स्त्रीसाधारणार्थे तत्र विशिष्टविधिः, अन्यथा स्त्रीणां प्रापकाऽभावात्तदलाभप्रसङ्गात्। किञ्च पृथग्विधौ निराकाङ्क्षत्वेन गुणविधानाऽसम्भवात्। अजस्त्रस्नानस्येष्टत्वात्। नाऽजस्त्रमित्यनेन वा व्युदस्तत्वात्। तदा कुञ्जरच्छाये श्राध्दं दद्या'दित्युदाहरणमेतत्। क्वचिद्विशिष्टावधिः, यदुक्तम् -

**प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः।**
**अप्राप्तं तु विधीयन्ते वहवोऽप्येक यत्नतः॥**

तत्र देशविशिष्टस्य यथा-गयायां श्राद्धं दद्यात्। अन्यथाऽमावास्यायामेव तत् स्यात्। तत्रैव श्राद्धस्याऽन्यतः प्राप्तत्वात्। सर्वतिथिष्वेव शिष्टैराचरणात्। यदि वा काम्यश्राद्धं सर्वतिथिसाधारणमेव प्राप्तं, तदापि विशिष्टस्य षोड-

शादिदैवतस्याऽप्राप्तत्वात्। क्वचित्कारकरूपगुणविधिः, यथा-’चमसेनापः प्रणयीत’ इत्यप्रणयने प्राप्त ‘गोदोहनेन पशुकामस्येति गोदोहनकरणत्वं विधीयते अगतिकत्वात्। क्वचित्कालस्य यथा-कुतपे श्राद्धं दद्यात्। क्वचित्कालविशिष्टस्य, यथा-’अपरपक्षे श्राद्धं दद्यात्।’ क्वचिद्द्रव्यस्य यथा-’पुरोडाशेन यजेत्।’ क्वचिद्यविशिष्टस्य कर्मणो यथा-’सोमेन यजेत।’ न तावदयं गुणविधिः। उद्देश्यानुपस्थितेः, अतएव तदुपस्थितौ यागद्रव्ययोः पृथग्विधौ वाक्यभेदापातात्। तस्माद्विशिष्टविधिरेव। तद्विशिष्टविधौ गौरवात्फर्मनामधेयतासोमपदस्येति प्राञ्चः। क्वचित्क्रमस्ययथा-’दर्शपौर्णमासाभ्यामिष्ट्वा सोमेन यजेत।’ क्वचिन्नियमस्य यथा-‘याजनादिभिर्ब्राह्मणो धनमर्जयेत्।’ क्वाचिदभावस्य, यथा- ’न कलञ्जं भक्षयेत्।’ ’न जीर्णमलबद्वासा स्नातकः स्यादि’ त्यादौ तु न निषेधविधिः सुवाससा भवितव्यमिति विधेस्तत्र मूलत्वेनाऽजीर्णमलशून्यवासोधारणपरत्वान्नानुयाजेष्वितवत्। अन्यथा विशिष्टनिषेधस्य नूतनमलवद्वस्त्रधारणेनाऽवस्त्रत्वेन च पर्यवसानप्रसङ्गात्। एकैकसत्वे विशिष्टनिषेधसम्भवात्। नाऽप्येकैकविशिष्टमेव निषिध्यते वाक्यभेदापातात्। विशेषणमात्रनिषेधेऽप्येवमेतत्। क्वचिदङ्गस्यगुणविधिः, यथा-खादिरं यूपमनक्ति तथास्य पुत्रा दीर्घायुषो भवन्ति। अत्र युगस्य सामान्यतोऽङ्गत्वलाभे खादित्वविधानात्।एवं चेकविधद्विविधिस्त्रिविधिर्वा। अदग्धदहनन्यायनाऽप्राप्तस्यैवविधे-यत्वात्। प्राप्तभागश्च तदु-

पकारकः 'भूतभव्यसमुच्चारेभूतंभव्यायोप-दिश्यते' इति न्यायात्। भूतं सिद्धं भव्यं साध्यं तयोः समाहारे भूतस्य भव्यर्थत्वं तदुपहितस्यैव तस्य भानात्। शुद्धस्य विधेय भागस्य भानाऽसम्भवात्। अप्राप्तोपरागविधायकत्वाद्विधेय एवेति कश्चित्। क्वचित्सापेक्षविधिः यथा उभयतिथिवेधमपेक्ष्य षष्ठीसमेतां सप्तमीमुपवसेत्। क्वचिद्बाधसापेक्षविधिः, यथा- 'न हिंस्यात्सर्वाभूतानि, श्वेतं छागमालभेत। यत्त्वत्र विरोधएव नाऽस्ति साधारणनिषेधबलेनाऽङ्गहिंसाया निषिद्धत्वेपि क्रत्वर्थत्वसम्भवात्। पशु बीजादिहिंसाङ्गकत्वेन यागमात्रस्यैव निषिद्धं स्यादिति तत्त्वकौमुद्यांटीकाकारलेखनं तत्तुच्छम्। प्रधानविधिनोपजीव्येनयाग बलवदनिष्ठाऽननुवन्धित्वेश्वगतेतदङ्गहिंसायामनिष्टसाधनत्वाऽसम्भवात्।

स च विधिः पुरुषार्थः क्रत्वर्थश्चेति द्विविधः। पुरुषार्थत्वं स्वतः फलसाधनगोचरत्वम्। यथा- 'अश्वमेधेन यजेत' तत्र यागस्य नाऽङ्गत्वं प्रधानत्वात्। क्रत्वर्थत्वं पराऽङ्गत्वं यथा-'श्वेतं छागमालभेत' आलभनस्य यागाङ्गत्वात्। एवं निषेधोऽपिद्विविधः। तत्र पुरुषार्थत्वं स्वतो नरकसाधनगोचरत्वम्। यथा- 'अगम्यां न गच्छेत्। क्रत्वर्थत्वं पराङ्गत्वमेव यथा-कृतसम्भोगं न निमन्त्रयेत्। नन्वेवं तदाऽऽचरणे पापमपि न स्यात्। कर्मणोऽङ्गभूतस्य निषेधस्य वैगुण्येऽपि तदाचारस्य पापहेतुत्वे मानाऽभावात्। न चेष्टाऽपत्तिः, प्रायश्चित्तेपदेशवैयर्थ्यादिति चेन्न। अङ्गवैगुण्ये प्रधानानिष्पत्तौ पापासम्भवात्। तदेवमतिपी-

ऽनेन विधिषु लाघवमेव शरणामित्यलमनेन ॥

अर्थवादस्त्रिविधः । यदुक्तम्--

**गुणवादो विरोधं स्यादर्थवादोऽवधारिते ।**

**भूतार्थवादस्तद्धानदनुवादस्त्रिधा मतः ॥**

गुणवादो यथा- 'यजमानः प्रस्तरः,' सिंहो माणवकः' अत्र निश्चलत्वसमर्थत्वादिप्रतीतेः प्रयोजनत्वम् । अन्यथा वैयर्थ्यात्, प्रयोजनप्रतीतेरेव गुणत्वात् । अनुवादो यथा-"वह्निर्हिमस्य भेषजम्' 'भूमिरावपनंमहत् ।' भूतार्थवादो यथा- "इन्द्रो वृत्रमजङ्घनत्' । सोऽपि चतुर्विधः । स्तुत्यर्थवादो निन्दार्थवादः परकृतिः पुराकल्पश्चेति भेदात् ॥ आद्यो यथा--"तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजत"॥ एवं-

**सन्ध्यामुपासते ये तु सततं शंसितव्रताः ।**

**वितपापाधूस्ते यान्ति ब्रह्मलोकं सनातनम् ॥**

अवसीदन्ति विधिशक्तिरेव चाऽर्थवादेनोत्तभ्यते। प्रशस्ते सर्वं' प्रवर्तते निन्दिताञ्च निवर्तत" इति न्यायात् । यदुक्तम्—

लिङोऽभिधा सैव च शब्दभावनाभाव्या च तस्याः पुरुषप्रवृत्तिः । सम्बन्धबोधः करणं तदीयं प्ररोचना चाङ्गतयोपयुज्यते ॥ प्ररोचनास्तुतिः । निन्दार्थवादो यथा--

**अन्धं तमः प्रविशन्ति ये केचाऽऽत्महनो[1] जनाः ।**

एवं–

**तैलस्त्रीमीमांससम्भोगी पर्वस्वेतेषु वै पुमान् ॥**

**विण्मूत्रभोजनं नाम प्रयाति नरकं नृप ।**

[1] ये सम्भूतिमुपासते' इति पुस्तकान्तरपाठः ।

तदेतदपि न स्वार्थपरम्। अपि तु विधिनिषेधस्तावकम्। 'न निन्दा निन्द्यं निन्दितुं प्रवर्तते, अपि तु विधिं स्तोतुम्' इति भट्टपादाऽभिधानात्। अन्यथा तात्पर्यभेदकल्पना गौरवात्। परकृतिर्यथा याज्ञवल्क्यः -आत्रेयमिति होवाच' इत्यादि परकृतीनां तत्र तत्रोदीरितत्वात्। एवं 'हुत्वा वपामेवाग्रेऽभिधारयन्त्यथ पृषदाज्यमेवाभिधारयान्ति" "अग्नेः प्राणाः पृषदाज्यस्तोममित्यभिदधति' इत्यादिकम्। व्याहतत्वमपि परकृतीनामपेक्षितमिति कश्चित्। पुराकल्पः कल्पान्तराऽऽचरणम्। ऐतिह्यरूपं प्रसिद्धमेवतत्। यथा-'तस्माद्वा एतेन पुरा ब्राह्मणावहिः पवमानसामस्तोममस्तौपन् योनेर्यज्ञं प्रतनवामहे' इत्यादिकम्। कथमनयोरर्थवादत्वमिति नाशङ्क्यम्। स्तुतिनिन्दावाक्येनाऽभिसम्बन्धादित्यलमनेन ॥

अथ प्रसज्यप्रतिषेधपर्युदासयोर्निरूपणम्। तत्र प्रसक्तधर्मस्य निषेधो यत्र प्रधानं स प्रसज्य प्रतिषेधः। तदुक्तं-

**विधेर्यत्राऽप्रधानत्वं प्रतिषधे प्रधानता।**
**प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥**

प्रसङ्गश्च कृतिसाध्यप्रसाधनत्वज्ञानम्। तच्च वैधं, रागजं च। तत्र वैधं यथा-श्येनेनाऽभिचरन् यजेत' इत्यादौ श्येनस्य साध्यत्वसाधनताऽवगेमो विधेरेव बोधकान्तराऽभावात्। तदुत्तरं न हिंस्यात्सर्वाभूतानि" इति निषेधः। तेन बलवदनिष्टसाधनत्वाऽवगमात्। रागजं यथा-"अगम्यान्न गच्छेत् तत्र सुखविशेषेहेतुताबोधः प्रत्यक्षैणैव प्राप्तेविधेरसम्भवात्। तदुत्तरं न गच्छेदित्यनेन निषेधः। तेन बलवदनिष्टसाधनत्व-

बोधनात्। एवं च निषिद्धस्याधर्मजनकत्वनियमः साध्यत्वसाधनत्वयोरवगतत्वेन निषेधाऽनन्वयात्। अन्यथा साधनत्वमादायाऽपिनिषेधपर्यवसानप्रसङ्गात्। यागादावपि रागज एव प्रसङ्गस्तदङ्गेषु वैधः "यागे रागादङ्गे वैधः" इति सिद्धान्तादिति कश्चित्। प्रसक्तिश्च वास्तवी निषेधाङ्गं न तु भ्रमादिना अतिप्रसङ्गात्। इष्टसाधनत्वाद्यभावमादाय निषेधस्य चरितार्थत्वे निषिद्धस्याऽधर्मजनकत्वनियमभङ्गप्रसङ्गात्। किं बहुना तथा सति निष्फलत्वकृत्यसाध्यत्वभ्रमान्निवृत्तिप्रसक्ताविष्टसाधनत्वकृतिसाध्यत्वबोधनार्थे भोजनादौ विधेरपि प्रसङ्गादित्यन्यत्र विस्तरः। यत्वेवं घटो नाऽस्तीत्यादावुक्तरूपप्रसङ्गाऽभावान्निषेधाऽनुपपत्तिरिति, तत्तुच्छम्। सन्देहसाधारणज्ञानमात्रस्यैव प्रसङ्गपदार्थत्वात्। वैदिके त्वधर्मजनकत्वाऽनुरोधेन तद्भेदावश्यकत्वात्। यद्वा प्रवृत्तबलवद्-निष्टाऽननुबन्धित्वभ्रम एवं प्रसङ्गपदार्थो लोकवेदसाधारणः। स चागम्यागमनत्वेन निष्फलसाधारण इति कश्चित्। पर्युदसनीयनिषेधश्च यत्र विधिविशेषणं तत्र पर्युदासः। तदुक्तं-

**विधेर्यत्र प्रधानत्वं प्रतिषेधेऽप्रधानता।**
**पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्॥**

असमासेऽपि न घटः पट इत्यादौ पर्युदासः। समासेऽपि 'अविवादः' इत्यादौ न तथेति। औत्सर्गिकमिदमिति प्राञ्चः। न घट इत्यादौ समास एव "अभावे नह्यनोनापि' इति कोशान्नपदस्यापि तदर्थत्वात्। अविवाद इत्यादौ पर्युदास एव अभाववत एवाऽर्थस्याऽवगमात्, अपदस्यैव वा निषेधार्थत्वादिति नवीनाः। यथा- यजतिषु ये यजामहं करोति नाऽनुयाजेषु

अत्र नञस्तदन्यत्वपरत्वम्। अनुयाजव्यतिरिक्तयजतिष्वित्यर्थात्। अन्यथा विधिनिषेधभेदेन वाक्यभेदाऽऽपातात्। एकवाक्यताऽनुरोधेन लक्षणाऽनुसरणस्य दृष्टत्वात्। अन्यथा गङ्गायां घोष इत्यत्राऽपि लक्षणा न स्यात्। जलपदाऽध्याहारेणाऽन्वयसम्भवात्। तथा- "अप्रयाजास्ते' इत्यत्रापि पर्युदासः। दर्शपौर्णमासयोः प्रयाजत्वमुक्तादीक्षणीयादियागेषु तस्याप्रसक्तत्वेन निषेधाऽसम्भवात्। तत्र पर्युदासेन प्रयाजाऽन्यतद्धर्माऽतिदेशात्। एवं सदृशादिपरत्वेऽपि लक्षणैव। लाघवेनाभावस्य शास्तत्वात्।

न च,

**तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।**
**अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः॥**

इत्यनुशासनविरोध इति वाच्यम् लक्षणादिनाऽपि तदर्थत्वसम्भवात् "गुणे शुक्लादयः पुंसि" इतिवत्॥

नन्वेवं, वापीकूपतडागयागगमनं क्षौरप्रतिष्ठाव्रतं
**विद्यामन्दिरकर्णवेधनमहादानं वनं सेवनम्।**
**तीर्थस्नानविवाहदेवभवनं मन्त्रादिदवेक्षणं**
दूरेणैव[1] जिजीविषुः परिहरेदस्तं गते भार्गवे॥

इत्यादावपि पर्युदास एव स्यात्। शुक्रास्तादिव्यातिरिक्ते कुर्यादित्यर्थात्। अन्यथा कर्तव्यताबोधकवाक्येन समं वाक्यभेदप्रसङ्गात्। एवं शुकास्तादौ कर्म साङ्गमेव सम्पद्यते 'जिजीविषुः' इत्यभिधानात्। दृष्टदोषपरमिति सिद्धान्तो न स्यात्।



[1]'दूरादेव' इतिपाठान्तरम्।

**सन्ध्यारात्र्योर्न कर्त्तव्यं सूर्ये चैवाऽचिरोदिते।**

इतिवत् कालवैगुण्यापातादिति चेत् अत्र वदन्ति। पर्युदासस्तावदांपवादिको लाक्षणिकत्वात्। मुख्यपरत्वे सम्भवति लक्षणाया अयोगात्। लक्षणाकल्पनं चैकवाक्यताबोधकसमभिव्याहारादिबलात्

गङ्गायां घोषः' नाऽनुयाजिषु' इत्यादिवत्। प्रकरणैक्यादेस्तात्पर्यबोधकत्वात्। एवमेव लक्षणाकपनेऽति प्रसङ्गात्। न चाऽत्र तथा। शास्त्रभेदेन समाभन्याहारादरभावात्। एवं शुकास्तादावपि कर्मफलं भवत्येव। अङ्गवैगुण्याऽभावात्। निषेधस्तु पुरुषार्थः। 'जिजीविषुः[1]' इत्यभिधानात्। अयमेव प्रसज्यप्रतिषेधपर्युदासयोर्विशेषः। प्रसज्यप्रतिषेधफलं भवत्येव बाधकाऽभावात्। परं तु वाचनिकमनिष्टमपि भवति। निषेधस्य पुरुषार्थत्वात्। पर्युदासे तु फलमेव न भवति अङ्गवैगुण्यात्। पापहेतुत्वे तत्र मानाभावात्। तदुक्तम्-

**यो नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत्।**
**क्रतोस्तेन न वैगुण्यं यथावेदितसिद्धितः॥**

वस्तुतो यत्र निन्दार्थवादस्तत्रैव प्रसज्यप्रतिषेधः। तस्याऽधर्मजनकत्वव्याप्तत्वात्। यत्र न तथा तत्र पर्युदासः। रात्रिश्राद्धादिवत्। समभिव्याहारवदर्थवादशुन्यत्वस्याऽपि तदेकवाक्यतापरत्वबाधकत्वात्। निन्दार्थवादस्य प्रसज्यप्रतिषेधसमव्याप्तत्वात्।

**नचैवं –**



[1] 'पुरुषार्थो न' इति पाठान्तरम्॥

**एकादशीमुपवसेद् द्वादशीमथवा पुनः ।**
**विमिश्रां वा प्रकुर्वीत न दशम्या युतां क्वचित् ॥**

इत्यत्राऽपि प्रसज्यप्रतिषेधाऽऽपत्तिः, इष्टत्वात्। एवं शुक्राऽस्तादौ प्रसज्यप्रतिषेध एव 'जिजीविषुः' इत्यभिधानात्।

**अनादिदेवतां दृष्ट्वा शुचः स्युर्नष्टभार्गवे ।**

इत्यादिनिन्दाश्रवणात्। अत एव प्रसक्ते प्रतिषेधः प्रसङ्गो वैधो रागजश्चाऽन्यत्र पर्युदासः इति वृद्धाः। तत्रैव निन्दार्थवादसम्भवात्। नन्वस्तु वैधत्वं विधिजत्वं, रागजत्वामत्यस्य कोऽर्थः ? रागःफलेच्छा तज्जन्यत्वमिति यदि, तदा श्येनादावपि तत्सत्वम्। तत्रेष्टसाधनत्वसत्वादिति चेदुच्यते। रागः फलेच्छैव तत्सत्वे तस्योद्देश्यत्वं तदन्वयव्यतिरेकादिना साध्यत्वसाधनत्वज्ञानं तदेव प्रसङ्गः श्येनादौ तदभागवात तत्र लौकिकप्रमाणस्येष्टसाधनत्वाद्यबोधकत्वादिति न किञ्चिदेतत्। इदं तु चिन्त्यते। रात्रिश्राद्धादावपि कथन्न रागजः प्रसङ्गः यत्किचित्फलस्य तत्राऽपि सत्त्वात्। अन्ततो गत्वाऽऽभिमानिकसुखवञ्चनादिसुखादेरपि भावात्। एवं स्त्रीशूद्रादीनां वेदपाठादावपि तत्सत्त्वं तत्रेष्टसाधनत्वसत्वात् जीविकात्वादिना धनोपायत्वसम्भवात्। तद्यावृत्तस्य रागत्वस्य दुरभिधानत्वादिति चेत् न। वञ्चनादिसुखे धनलाभे वा तेषामहेतुत्वात्। सत्यपि श्राद्धे वेदपाठे वा तदभावात्। तत्रान्तरीयकस्य कारणाऽन्तरस्याऽऽवश्यकत्वात्। विषसंपृक्तानभोजनगललग्नाऽन्नमरणादिवत् भोजनस्य

मरणाऽहेतुत्वात्। किञ्चैवं वेदपाठस्य रागप्राप्तत्वे "स्वाऽध्या-

योऽध्येतव्यः" इति विधिवैफल्यं स्यात्। तद्दृष्टार्थत्वे सम्भवति अदृष्टार्थत्वाऽसम्भवादित्यलमनेन।

मनुः –

**अधाशायी जटाधारी पर्णमूलफलाशनः ॥**
**कालमेकं समश्नानो वर्षे तु द्वादशे गते ॥**
**रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः ॥**
**व्रतेनैतेन शुध्यन्ति महापातकिनस्त्विमे ॥**

अत्र सजातीयविजातीयरूपाणां द्वादशाब्दनिरस्यानां पापानां सकृदनुष्ठितेनैव द्वादशाब्देन विनाशः तन्त्रात् षड्वार्षिकादिविनाश्यानामपि प्रसङ्गात्। ननु प्रयोगविध्यैक्ये तन्त्रत्वं सकृदनुष्ठितानां प्रयाजादीनामाग्नेयादित्रयोपकारकत्वात्। अन्यथैकस्य नानाफलकत्वे योगसिद्ध्यधिकरणविरोधादिति चेन्मैवम्। नानोद्देशेन सकृदनुष्ठाने तन्त्रता, तन्नियततदन्यफलसिद्धौ प्रसङ्गः, तद्धेतुश्चाऽदृष्टार्थस्य कर्मण एकजातीयस्य देशकालादीनामेकरूपत्वेनाऽवगमे विशेषशून्यत्वम्। न तु प्रयोगविध्यैक्यमपि तद्धेतुः मानाऽभावात् अनावृत्तेनैव नानाफलसिद्धौ लाघवेन सकृदनुष्ठानात्। अङ्गानां तु प्रयोगविध्यैक्यं हेतुः। अन्यथाऽतिप्रसङ्गात्। प्रयाजादीनामाग्नेयादित्रयोपकारकत्वात्। अन्यथाऽनङ्गव्यवायात् अनङ्गव्यवधानस्य चाऽशास्त्रार्थत्वात्। न च योगसिद्धिविरोधः। तत्र फलकामनाभेदेनाऽधिकारिभेदात्तन्त्राऽसम्भवात्। अनेकेषां फलानामेकलाध्यत्वे तन्त्रत्वमेव दशविधपापनाशने दशाहस्नादिस्नानवत्। एवं चाऽऽरब्धाऽपरपक्षश्राद्ध-

स्याऽष्टकाश्राद्धं तन्त्रेणैव सिद्ध्यति तदितिः कर्त्तव्यताभेदाऽभावात्। नित्यं षड्पुरुषश्राद्धप्रसङ्गात्। एतदधिकाचरणेऽपि तवाचरणस्यावश्यकत्वात्। कश्चित्तु 'आदावन्ते वा न्यूनाऽधिकाङ्गभावे प्रसङ्गो न तु मध्येऽपि अनङ्गव्यवधानेन हीनाङ्गनिष्पतेरभावात्' इत्युक्तवान्। तदनयोरतिनिष्पीडनेन लाघवं शरणमित्यलमनेन ॥

कात्यायनः –

**न योषियः पृथग् वधादवसानदिनाहते ॥**
**स्वभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता ॥**

अत्र पृथग्दाननिषेधादर्थादपृथग्दानसिद्धौ साहित्येन सहत्वेन वा पतन्यास्तदेवतात्वम्। अन्यथा पृथक्पदवैफल्यादिति चेन्न। साहित्यं तुल्यद्वारत्वं, समानरूपाणां परस्परसापेक्षाणामेकक्रियान्वययोग्यत्वमिति यावत्। यथा 'धवखदिरपलाशान् छिन्धि'। तत्र तेषां तुल्यवदेव छेदनसम्बन्धाऽवगमात्। अथ वा आसहस्रवर्षे सप्तदशावरा ऋत्विजः सत्रमुपासीरन्, तत्र तेषां गुणमुख्यभावाऽभावात्। तदेवाऽतुल्यरूपाणां सहत्वम्। यथा "यत्कुर्यात्तदनया सह" तत्र यजमानस्य हविःक्षेपादिरूपो व्यापारः, पत्न्यास्तु न तथा कथञ्चिदाज्याऽवेक्षणाऽनुमत्यादिद्वारा तथात्वात्। एवं यजमानब्राह्मणयोरविशेषात्। न चेह तथा "पित्रे पितामहाय" इत्यादिश्रुतौ निरपेक्षताऽवगमात्। पृथक्पदस्याऽनुवादत्वात्। योषिद्भ्य इत्यत्र तवाऽपि तदावश्यकत्वात्। मिलितदेवतात्वे पुंसोऽपि तथात्वात्। नचाऽप्रसने निषेधाऽनुपपत्तिः, वृद्धिश्राद्धप्रसक्तस्य शाखिविशेषे निषेधसम्भवात्। वस्तुतः पर्युदासेन योषिदन्यस्य पृथग्दानपरत्वमिति न किञ्चि-

देतत्। यदपि, "पितृभ्यो दद्यात्' इति विधिबलात्पुरुषाणामेव साहित्येन देवतात्वं तेन विना बहुत्वाऽन्वयाऽयोगादिति तदपि न। उक्तश्रुतिविरोधात्। बहुत्वस्य ज्ञानरूपैकद्वाराऽविच्छिन्नेष्वन्वयसम्भवात्। यत्किञ्चिदेकक्रियासम्बन्धस्यैव तुल्यद्वाररूपत्वात् तस्यैव साहित्यत्वात्। अन्यथा "गर्गा भोज्यन्ताम्" इत्यादौ गत्यभावाभोजनस्य प्रत्येकपरिसमाप्तत्वेनैकक्रियाऽन्वयाऽसम्भवात्। ज्ञाननिरूपिततथात्वस्य तुल्यत्वात्। यदि चैकजातीयद्वारसम्बन्धित्वमेव साहित्यं, तदा न दोशषङ्काऽपीति निस्तरङ्गमेतत् ॥

**अथ श्रुतिलिङ्गादिनिरूपणम्।**

तत्र सूत्रम् "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" (३।३।१४) तत्र निरपेक्षो रवा श्रुतिः। अर्थप्रकाशनसामर्थ्यं लिङ्गम्। अर्थैक्याऽवच्छिन्नपदसमूहो वाक्यम्। लब्धवाक्यभावस्य कार्यान्तराऽपेक्षावशेन वाक्यान्तरसम्बन्धाकालापर्यवसितं प्रकरणम्। वक्तृश्रोतृबुद्धिस्थत्वम्' इति कश्चित्। अनेकस्याऽऽम्नातस्य सन्निधिविशेषाम्नानं क्रमः। योगबलं सामाख्येति। तदुक्तं-

**श्रुतिर्द्वितीया क्षमता च लिङ्गं**
**वाक्यं पदान्येव तु संहतानि।**
**सा प्रक्रिया या कथमित्यपेक्षा**
**स्थानं क्रमो योगबलं समाख्या ॥**

तत्र श्रुतिर्यथा - व्रीहीनवहन्ति,' तत्र व्रीहीणामवघातशेषित्ववोधने द्वितीयायाः क्रियाफलशलत्वरूपक्रमत्वबोधिकाया निरपक्षत्वात्। द्वितीयत्युपलक्षणम्, तृतीयादेरपि तथात्वमवि-

शेषात्। लिङ्गं यथा-'-बर्हिर्देवसदनं दामि" इति, अत्र दामीत्यनेन 'दोऽवखण्डने' इति धात्वनुसाराच्छेदनरूपाऽर्थप्रकाशकेन बर्हिश्छेदने विनियोगो लभ्यते। परस्पराऽऽकाङ्क्षाबलात्। वाक्यं यथा- "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये त्वा जुष्टं निर्वपामि' अत्र लिङ्गेन निर्वापे विनियुज्यमानस्य समवेतभागस्य एकवाक्यताबलेन "देवस्य त्वा" इत्यादिभागस्याऽपि तत्र विनियोगः। बाधकाऽभावात्॥

तदुक्तम्-"अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" (२॥१॥४६) इति विभागसाकाङ्क्षत्वमात्रे "स्योनं ते सदनं कृणोमि" इत्यादिमन्त्रभागस्य 'तस्मिन् सीद" इत्यनेनाऽप्येकवाक्यत्वं स्यादित्याद्यपदम्। तत्र सदनसादनरूपार्थभेदात्। तावति च "भगो वा विभजतु पूषा वां विभजतु" इत्यनयोरकवाक्यत्वं स्यात्। अतोऽन्त्यपदम्। तत्राकाङ्क्षाऽभावात्। तदुक्तम्-

**साकाङ्क्षावयवं भेदे पराऽनाकाङ्क्षशब्दवत्।**
**कर्मप्रधानं गुणवदेकार्थं वाक्यमुच्यते॥ इति।**
**'लक्षणभेदपरत्वमस्य' इति कश्चित्।**

प्रकरणं यथा- "दर्शपौर्णमासाभ्यां यजते" इति विधौ कथम्भावाऽऽकाङ्क्षायाम् "इडो यजति," "समिधो यजति," "बर्हिर्यजति," "स्वाहाकारं यजति, तनूनपातं यजति' इत्यनेन तदेकवाक्यतापन्नेन पञ्चप्रयाजानामङ्गत्वबोधनं पाठवशाच्छेषित्वलाभात्। परस्परमङ्गाऽङ्गिसाकाङ्क्षत्वात्, फलान्तरस्याऽश्रुतत्वात् दग्धाऽश्वरथवत्। यथा एकस्य रथो दग्धः परस्याऽश्व इति द्व-

योः साकाङ्क्षत्वादुभाभ्यामेव रथसज्जीकरणम्।

क्रमो यथा-आग्नेयाऽग्नीषोमीयोपांशुयागाः क्रमेण ब्राह्मणभागे पठिताः। मन्त्रभागेऽपि क्रमेणाऽनुमन्त्रणमन्त्रत्रयंपठितम्, तत्राग्नेयवैष्णवयोर्द्वयोर्लिङ्गनैव विनियोगसिद्धिः। "दभिरसि" इति मन्त्रस्य तु न लिङ्गविनियोजकं किंतु यस्मिन्देशे ब्राह्मणे उपांशुयागः पठितस्तत्रैव। मन्त्रेऽप्यस्य पाठ इति क्रमेणोपशुयागानुमन्त्रणेऽस्य विनियोग "अणुरपि विशेषोऽध्येयवसायकरः" इति न्यायात्। लघोरपि विशेषस्य नियामकत्वात्।

समाख्या यथा-"हौत्रमौद्रात्रं जुहोति' अत्र होतुरिदमिति यौगात् हौत्राख्याकर्मणि होतुरधिकारोयोगशक्तेः तदर्थबोधकत्वात्। होता ऋग्वेदी ऋत्विक्। उद्गाता सामवेदी।

**अध्यर्द्धातृहोतारों यजुःसामग्विदः क्रमात्।**

इति कोशस्वरसात्। न च समुदाये शक्तिः। प्रमाणाऽभावात्।

यदुक्तं भट्टेन-

**पाकं तु पचिरेवाह कर्तारं प्रत्ययोऽप्यकः।**
**पाकाश्लिष्टः पुनः कर्ता वाच्यो नाऽन्यस्य कस्यचित्।**

एतेषां परस्परमिलने परस्य परस्य दौर्बल्यम्। विलम्बेनाऽर्थबोधकत्वादित्यलं विस्तरेण।

तत्र श्रुतिलिङ्गयोः समाहारे श्रुतेर्बलवत्वम्। यथा-"कदाचन स्तरीरसि नेन्द्र सञ्चसि" इत्यादिऋचो विनियोजिका श्रुतिः। "ऐन्द्या गार्हपत्यमुपतिष्ठते" इत्यत्र

द्वितीयारूपश्रुतेरग्नेरुपस्थानशेषित्वमवगम्यते। तस्य क्रियाजन्यफलशालित्वबोधजनकत्वात्। एवं तृतीयया प्रकृत्यर्थस्य साधकतमत्वरूपशेषित्वम्। तस्य तच्छक्तत्वात्। तच्चवह्नि-प्रकाशकस्यैव योग्यताबलात्। एवं "ऐन्द्या" इति विधिवाक्यस्थिता-दिन्द्रसञ्चसीति मन्त्रास्थतादिन्द्रप्रकाशकत्वरूपलिङ्गादिन्द्रस्योपस्थानशेषित्वम्। तत्प्रकाशकस्य चोपस्थानकरणत्वम्। अन्यप्रकाशकस्याऽन्यत्र विनियोगाऽसम्भवात्। तदत्र श्रुतिलिङ्गयोः समाहारे श्रुतेरेव बलवत्वम्। निरपेक्षत्वात्। तस्यास्तच्छक्तत्वात्। लिङ्गस्य श्रुतिपरिकल्प्य तद्बोधकत्वेन तदुपजीवकत्वात्, सर्वत्र श्रुतेरेव विनियोजकत्वमिति तदङ्गीकारात् शक्तस्यैव बोधकत्वात्श्रुतार्थापत्यनुसारात्। नह्यनेनेन्द्र उपस्थातव्य इति लिङ्गेन साक्षादवगम्यते किं तु तत्प्रकाशनसमर्थत्वेनाऽन्यथाऽनुपपत्याकल्प्यत इत्यवश्यं श्रुतिकल्पने विलम्बसम्भवात्। इन्द्रपदं "इदि परमैश्वर्ये" इति धात्वनुसारेणेश्वपरं तेन च वह्नेरपीश्वरत्वादाग्नेयिनामेव ऋचां लाभः। इन्द्रपदस्य तदर्थप्रकाशनसामर्थ्यात्। ननु "ऐन्द्या गार्हपत्यम्" इत्यत्रैवेन्द्रपदमीश्वरपरमस्तु, एवम् आग्नेय्या गार्हपत्यम्' इत्येवाऽर्थः स्यादिति चेन्न। व्यक्तिवचनानां सन्निहितविशेषपरत्वेन तस्य कदाचन स्तरीरसि" इति मन्त्रविशेषपरत्वात् तस्य चन्द्रप्रकाशकत्वात्, वह्न्युपस्थापने विनियोगासम्भवेन तदावश्यकत्वात्।

लिङ्गवाक्ययोः समाहारे लिङ्गस्य बलवत्त्वम्। यथा- स्योनं

ते सदनं कृणोमि घृतस्य धारया सुषेवं कल्पयामि, तस्मिन् सीद' इत्यत्र सदनसादनरूपयोः। प्रकाशनरूपालिङ्गात्मन्त्रभागयोरुभयत्र विनियोगो लभ्यते, योग्यताबलात्। वाक्यबलात् तु मिलितयोरेव सदनेसादनेव तदवगमः। समभिव्याहारेणैकवाक्यताऽवगमात्। यत्पदाऽऽक्षेपेण यत् कल्पयामि तत्र सादेत्यर्थैक्यात्। विभागे साकाङ्क्षत्वात्। तदत्र लिङ्गवाक्ययोः समाहारे लिङ्गस्य बलवत्त्वम्। तस्य तच्छक्तपदरूपत्वेनोपजीव्यत्वात्। वाक्यस्य तच्छक्तपदसमभिव्याहाररूपत्वेन शक्त्युपजीवकत्वात्। समभिव्याहाररूपवाक्येन लिङ्गपरिकल्प्य श्रुतिकल्पनाद्वाराऽर्थबोधनात्। किञ्चैकवाक्यताऽनवगमेऽपि सामर्थ्याऽवधारणात्वाक्यस्य बलवत्वाऽयोगात्। अवगतसामर्थ्यानां सन्निधिपठितानां पदानां सामर्थ्यबलेन प्रयोजनैकतया चैकवाक्यत्वाऽवधारणम्। एवं च प्रथमप्रतीतानां सदनसादनसामर्थ्यानां क्लृप्तेन श्रुतिद्वयेन भागयोः प्रत्येकं विनियोगबोधनानैकवाक्यत्वम्। विरोधिलिङ्गाऽभावे वाक्यैकवाक्यता सम्भवात्

वाक्यप्रकरणयोः समाहारे वाक्यस्य बलवत्वम्। यथा- इदं द्यावापृथिवीभद्रमभूताम्" इति सूक्तवाक्ये 'इदमग्निर्हविजुषते इदं सोमोहविज्जुषते, इदं प्रजापतिहविर्जुषते' इत्यादौ प्रकरणात् षड्वपि यागेषु षण्णां मन्त्राणां विनियोगः प्रसक्तः अविशेषात्। वाक्यबलात्तु प्रत्येकं प्रत्येकस्याऽग्न्यादिपदसमभिव्याहाररूपवाक्यस्य प्रत्येकमेव तत्वात्। क्वचित्तु "इन्द्राग्नी इदं हविरजुषतामवीवृधेतां महो ज्यायो कालाम्" 'अग्नीषोमाविदं हविरजु-

षतां महोज्यायो क्राताम्' इत्यवान्तरवाक्यद्वयमस्ति तत्र पौर्णमास्यामिन्द्राग्नी न देवते इति लिङ्गा-उत्पदमपनीयेत। दर्शे तु समवेतार्थत्वान्न त्यज्यते। तत्र सन्देहः। इन्द्राऽग्निपदे एकवाक्यतापन्नान्यवीवृधेतामित्येतान्यपि तत्राऽपनेयानि, अथवा प्रयोक्तव्यानि। तत्र प्रकरणात्तत्पदाऽनपनयः प्रतिभाति। असमवेतत्वेन देवतामात्राऽपनयात्। वाक्यात्तु तान्यपनेयानीत्यवगम्यते। येन यदेकवाक्यतापन्नं तेन सहैव तदपनयौचित्यात्। इति विरोधोदाहरणम्। तदत्र प्रकरणवाक्ययोः समाहारे वाक्यं बलवत्। निरपेक्षत्वात्। प्रकरणस्य समभिव्याहारसापेक्षत्वात्। प्रकरणस्याऽऽकाङ्क्षारूपस्य समभिव्याहारं परिकल्प्य श्रुतिकल्पनाद्वारा तदर्थबोधकत्वात्। एवं शीघ्रप्रवृत्तिकेन वाक्येन यदपनीयते यद्वाऽन्यत्र नीयते तद्विहायाऽवशिष्टभागेन प्रकरणाऽऽकाङ्क्षपूरणात् विराधमन्तरेणप्रकरणस्य नियोजकत्वात् "इडो यजति" इतिवत्। अत्र प्रकरणस्य विलम्बितत्वेन दुर्बलत्वात्वाक्यपदानासम्बन्धस्य प्रत्यक्षसिद्धत्वेनाऽभिधानसामर्थ्ये, श्रुत्युन्नयनम्, ततो विनियोग इति तृतीयकालसम्मवात्। प्रकरणे तु आकाङ्क्षाबलेन पदानां सम्बन्धोऽपि कल्प्यत इति चतुर्थकालविनियोग इति।

प्रकरणस्थानयोः समाहारे प्रकरणस्य बलवत्वम्। यथाराजसूये नानाकरणार्थके "अक्षैर्दीव्यति' इत्यादिनोक्तस्य देवनादेरभिषेचनस्थाने पाठात्तदङ्गत्वमवगम्यते। सन्निधिविरोधरूपस्थानबलात्। प्रकरणात्तु सर्वप्रकरणाङ्गत्वं बाधकाभा-

वात्। तत्प्ररकणस्य बलवत्वम्। उत्थिताऽऽकाङ्क्षत्वेन निरपेक्षत्वात्। कथं स्यां केन स्यामित्याकाङ्क्षयोर्दुचारत्वात् स्थानस्य सन्निधिविशेषरूपस्याऽऽकाङ्क्षां विनाऽकिञ्चित्करत्वात्। आकाङ्क्षाऽऽसत्याद्वयोरपि विनियोगप्रयोजकत्वात्। एवं सन्निधिविशेषणाऽऽकाङ्क्षमुत्थाप्य परम्परया श्रुतिकल्पनम्। तथाहि आकाङ्क्षोत्थापनम्, एकवाक्यत्वम्, सामर्थ्यकल्पनम्, श्रुत्युन्नयनम्, ततो विनियोग इति विलम्बसम्भवात्। प्रकरणे चोत्थिताऽऽकाङ्क्षत्वेन प्रथममेकवाक्यत्वस्येव कल्पनासम्भवात्।

स्थानसमाख्ययोः समाहारस्थानस्य बलवस्वम्। यथा "शुन्धध्वं दैव्यायं कर्मणे देवयज्यायै" इति मन्त्रस्य प्रेक्षणे तावात् विनियोगः। तत्र पौरोडाशिको मन्त्र इति समाख्याबलात्पुरोडाशप्राक्षणशेषत्वमवगम्यते। दध्याद्[1]नरूपसान्नाव्यहोमसान्निधानपाठात्तत्प्रोक्षणाऽङ्गत्वम्। तदेवं स्थानस्यैव बलवत्वम्। सन्निधानं विना समाख्याया अकिञ्चिकरत्वात् सन्निधिपरिकल्पने गौरवात्। समाख्यायाः क्रमेण स्थानादिकमुन्नीय श्रुत्युन्नयनद्वारा पटुकालेविनियोगसम्भवात्। स्थाने तु क्रमःप्रत्यक्षसिद्ध एवेति न कल्प्यः। एवं च तेन प्रथमत एव प्रकरणाऽनुमानम्, तेन वाक्यं, तेन लिङ्ग, तेन श्रुतिः, तया विनियोग इति पञ्चमकाल एव विनियोगसम्भवात्। तदेवमतिपीड़नेन तेषां विनियोजकत्वे बलाऽबलं लाघवनिबन्धनमेवत्यलमनेन। तदुक्तम् -

**एकद्वित्रिचतुः पञ्चवस्त्वन्तरयकारितम्।**
**लिङ्गादीनां च वैषम्यं श्रुत्यपेक्षे प्रतीयते ॥**



[1]'दध्याज्यरूप' इति पुस्तकान्तरे पाठः।

**बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा ।**
**मध्यमानां तु बाध्यत्वं बाधकत्वमपीष्यते ॥**

मत्स्यपुराणे--

**ततःप्रभृतिसङ्क्रान्तावुपरागादिपर्वसु ।**
**त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टंमृताऽहनि ॥**

नन्विदमयुक्तम,

**अयनद्वितये श्राद्धं विषुवद्दितये तथा ।**
**सङ्क्रान्तिषु च सर्वासु पिण्डनिर्वाणादृते ॥**

इत्यनेन तत्रैव सङ्क्रान्तिषु पिण्डदाननिषेधादिति चेन्न । निषेधबाघ, सापेक्षविधिसम्भवात् षोडशिग्रहणनिषेधबाधपुरःसर एय[1] तद्ग्रहणविधिवत् । विकल्पे तथैव सिद्धान्तात् । न च गौरवमनन्यगतिकत्वात् । यत्र तु विषयभेदादिगत्यन्तरसम्भवस्तत्र न तथा बाधकल्पनं गौरवात् । एवं ''मा हिंस्यात्सर्वा भूतानि'' इति निषेधबाधपुरःसरं श्वेतं छागमालभेत'' इति विधौ द्रष्टव्यम् । तदवमेतदङ्गीकारेऽनन्यगतिकत्वम् । अनङ्गीकारे गौरवमेव बाधकं शरणमित्यलमनेन ॥

**अथ प्रतिप्रसवनिरूपणम् ।**

स च सामान्यतानिषेधस्य विशेषे तदपवादः । यथा-

**क्षयाहे पार्वणं कुर्वन्नधोऽधो याति मानवः ।**

इति सामान्यतो निषेधाऽनन्तरं,

**अमायां तु क्षयो यस्य प्रेतपक्षेऽथ वा भवेत् ।**
**सपिण्डीकरणादूर्ध्वं तस्योक्तः पार्वणो विधिः ॥**

1 'एव' नास्ति पुस्तकान्तरे ।

इत्यपवादः तदतिरिक्तस्य पार्वणनिषधे पर्यवसानात्। नन्वेवं स्त्रीणामप्यमावास्यादौ पार्वणं स्यात्प्रतिप्रसवलादिति चेन्न, प्रसङ्गविषयस्यैव प्रतिप्रसवचरत्वात्। स्त्रीणां पार्वणाऽप्रसक्तो निषेधाऽभावे न प्रतिप्रसवाऽयोगात्। तथा हि यत्रैव प्रसङ्गस्तत्रैव निषेधः अप्रसक्ते तदसम्भवात् यत्रैव निषेधस्तत्रैव प्रतिप्रसवः तदशवाधरूपत्वादिति न किञ्चिदेतत्। यदि तु 'पार्वणविधिः' इत्याभिधानादेकस्यैव पुरुषस्य श्राद्धेपावणतिकर्तव्यतावाधकं विध्यन्तरामिदं, न प्रतिप्रसवः तदा,

**सूर्योदयं विना नैव स्नानदानादिकाः क्रियाः।**

**अग्नेर्विहरणं नैव क्त्वभावश्च लक्ष्यते ॥**

इति निषेधे-

**राहुदर्शनसङ्क्रान्तिविवाहात्ययवृद्धिषु।**

**स्नानदानादिकं कुर्यान्निशकाम्यव्रतेषु च ॥**

इति तदुदाहरणम्। नन्वस्त्वेवं तथाऽपि बाधसापेक्षविधेरस्य' को विशेष इति चेन्न। अस्य विधित्वाऽभावात्। प्राप्तश्राद्धादिषु निषेधसङ्कोचकमात्रत्वादिति न किञ्चिदेतत्। अन्यथा विध्यन्तरः कल्पने गौरवात्। तदेवमतिपीडनेन तदुपादाने लाघवमेव शरणमित्पलमनेन ॥

**अथ विकल्पः।**

स द्विविधः। व्यवस्थित ऐच्छिकश्च। व्यवस्था[1] च पुरुषशाखाकालदेशकुलशक्तिभेदादित्यन्यत् ॥

छन्दोगपरिशिष्टे-

**अग्नौकरणहोमश्च कर्तव्य उपवीतिना।**



[1]'व्यवस्थितत्वंच' इतिपाठान्तरम् ॥

**प्राङ्मुखेनैव देवेभ्यो जुहोतीति श्रुतिश्रुतेः ॥**
**अपसव्येन वा कायदक्षिणाभिमुखेन च ।**
**निरुप्य हविरन्यस्मा अन्यस्मै न च हूयते ॥**

एवम्- "एकादशे द्वादशे वाऽहनि पिता नाम कुर्यात्। तत्र शास्त्राभेदादिना व्यवस्थितविकल्पो विषयः शिष्टोक्तत्वात्। 'अतिरात्रे षोडाशिनं गृह्णाति" "नाऽतिरात्रे षोडशिनं गृह्णाति" इतिवत्। तत्र स्तुतशस्त्रादिषोडशेतिकर्तव्यताकत्वेन षोडशिनामकग्रहाविशेषस्य ग्रहणाऽग्रहणयारेकत्र तुल्यवदङ्गत्वाऽसम्भवो विरोधादिति शक्तिरूपावच्छेदकव्यवस्थितविकल्पादरात्। तदुक्तं द्वितीयाऽध्याये- "शक्त्यपेक्षो विकल्पः षोडशिग्रहणाऽग्रहणवत्' इति। न त्वैच्छिकः। तथा सति निष्फलेग्रहणे प्रवृत्त्यसम्भवात्। बलवद्वेषसम्भवात्। न च फलभूमा, एका देयाः तिस्रो देयाः षड् देया इतिवत्सम्भवति लघूपाये गुरोरननुष्ठानलक्षणाऽप्रामाण्यप्राङ्गादिति वाच्यम्। अङ्गत्वात्। नाऽपि तदङ्गत्वाऽवच्छिन्नस्य प्रधानस्यैव तथात्वम्। अत एव निबन्धेषु षोडशिग्रहणवत् फलभूमेत्युक्तमिति वाच्यम्।

तथाप्यष्टदोषग्रासात्। तथाहि-

**प्रमाणत्वाऽप्रमाणत्वे परित्यागप्रकल्पनम्।**
**प्रत्युज्जीवनहानाभ्यामेवं स्यादष्टदोषता ॥**

अयमर्थः- द्वयोरेच्छिकविकल्पे यदैकोपादानं तदा तद्बोधकविधेः प्रामाण्यकल्पनम्, अङ्गीकृताऽप्रामाण्यपरित्यागः। यदा पुनस्तस्यैवाऽनुपादानं तदाऽप्रमाणत्वकल्पनं, प्रामाण्यपरित्या-

गश्चेत्येकत्र चत्वारो दोषाः। एवं परत्राऽप्युक्तप्रकाराऽविशेषात्। प्रत्युज्जीवनमुपादानम्। हानं परिहारः। कस्यचिद्बाध्यबाधकत्वम्, बाध्यबाध्यत्वम्, बाधकबाधकत्वं बाधकबाध्यत्वं, चेति चतुष्कं व्रीहियवविध्योः परस्परमित्यष्टदोषत्वमिति फलतो न विशेषः ॥

तदुक्तम्-

**एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः।**
**विकल्प आश्रितस्तत्र गतिरन्या न विद्यते ॥**

विकल्प ऐच्छिकः। युगपदुभयोपादानयोग्यत्वे तस्यैव स्वीकारात्। व्यवस्थितविकल्पे तु न दोषः। विशेषविषयत्वेनैकत्र विधिनिषेधाऽभावात्। परस्परसम्बन्धात्। तदेवमति पीडनेन लाघवमेव शरणमित्यलमनेन।

कात्यायन:- अमावास्यायां श्राद्धदः सर्वान्कामानवाप्नोति" अत्र योगसिद्धिनयादकैकमेव फलसम्बन्धः। "एकैकस्मै फलायान्ये यज्ञक्रतव आद्रियन्ते ' सर्वेभ्यो दर्शपौर्णमासौ' इतिवत्। योगस्य फलसम्बन्धस्य प्रत्येकमेव सिद्धिसम्भवात्। फलान्तरे निराकाङ्क्षात्वादिति कश्चित्। तन्न, योगसिद्धेर्विशेषपरत्वात्।

**पक्षत्यादिविनिर्दिष्टान् विपुलान् मनसः प्रियान्।**
**श्राद्धदः पञ्चदश्यां तु सर्वान्कामान्समश्नुते ॥**

इत्यादिवचनबलेनाऽत्र समुच्चयाऽवगमात्। वाचनिके तदनवतारात्। तथा हि सर्वेभ्य' इति सर्वनामपदं बुद्धिस्थवाचकम्। बुद्धिस्थता च येन रूपेण तेनैव तदुपस्थापकं तच्च फल-

तावच्छेदकरूपेणैव तत्र तत्र श्रुतत्वात्। एवं च तेनैव रूपेण फलाऽन्वयः मिलतापस्थापकाऽभावात्। न वा निर्धारितमेकं सर्वेभ्य इति श्रवणात्। यत्र च समुच्चयबोधकं तत्र तत्स्यादेव, मिलितस्य फलत्वाऽवगमेतदवताराऽसम्भवात्। न च प्रकृते तदभावः पक्षत्यादीति विशेषोपादानेन तदवगमात्। अन्यथा तद्वैयर्थ्यात्। न च प्रत्येकमुपस्थितौ मिलितस्य बुद्धिस्थत्वं भवत्येवेति वाच्यम्। तथा कम्पनमानाऽभावात्। फलतावच्छेदकाऽन्तरे गौरवात्। न च फलनानात्वमेव तदभावबीजम्। अनेकेषां फलानां तन्त्रेणैककामनाविषयत्वसम्भवात्। दशहरावत्। शूलपाणिभवदेवादिभिस्तथैव लेखनात्। तदेवमतिपीडनेन लाघवमेवशरणमित्यलमनेन। मत्स्यपुराणे-

**सामान्यं सर्वभूतेभ्यो मयोत्सृष्टमिदं जलम्।**

**रमन्तु सर्वभूतानि नानपानाऽवगाहनैः ॥**

इत्यादौ सर्वपदस्वरसात्स्वस्यापि स्वखातजलोपभोगो न विरुद्धः। औपादानिकस्वत्वाऽविशेषादिति कश्चित्। तन्न। तिर्य्यगधिकरणविरोधात्। तथा हि-तिर्यक्पङ्गुत्र्यार्षेयदेवतानामनधिकारः। तत्र तिरश्चां विशिष्टान्तःसंज्ञाविरहात्, पङ्गोः प्रचरणाऽभावात्, त्रीण्यार्षेयाणि ऋषियोग्यानि येषामन्धबधिरमूकानां तेषामवेक्षणश्रवणोच्चारणाविरहात् युक्तोऽनाधिकारः। देवतानामत्यन्तविदुषीणां कथमनधिकारः। अचैतन्यादेव तासामनाधिकार इति चेन्न। विशिष्टस्याऽचेतनत्वेऽपि विशेषणस्याऽतथात्वात्[1] अन्यथा राजसूयादिफलत्वश्रुतिविरोधात्। किञ्चैवं घटादेरप्यनाधिकारधोधनप्रसङ्गात्। तस्मात्स्वयमेव हविस्त्यजति स्वस्यैव



[1]'विशेषणस्यतथात्वात्' इतिपाठान्तरम्॥

चोद्देश्यत्वमिति न सम्भवतित्यागाद्देश्यत्वतत्कर्तृत्वयोर्विरोधादित्यनाधिकारबीजम्। वनवाप्यादित्यागेऽपि तुल्यमेतत्। न चैकस्त्यजतु स च विश्वे चोद्देश्यः इत्यविरोधः। तुल्यत्वात् अत एव सत्रे न दक्षिणा यष्टृणामेव ऋत्विक्त्वेनाऽभेदात्। त्यागकर्तुस्तदुद्देश्यत्वविरोधात्। किञ्च यस्य तज्जन्यस्वत्वं विना विनियोगाऽसम्भवः तस्यैवोद्देश्यत्वम्। स्वस्य च तदभावात्प्रागपि स्वत्वसत्वात्। अथाऽनुद्देश्यस्याप्यौपादानिकं स्वत्वमस्त्विति चेन्न। स्वत्यक्ते स्वोपादानत्वाऽदर्शनात्। किञ्चैवं सत्रेऽपि दक्षिणा स्यात्। एवं तत्र न दक्षिणेति प्रलापः स्यात्। वस्तुतो नाऽनयोस्तुल्यत्वम्। यागादाविन्द्रादीनां स्वत्यागोद्देश्यकत्वबोधकाऽभावात्। वाप्यादौ सर्वपदस्वरसेन तदवगमात्। दक्षिणादानं तु न दृष्टान्तः। तत्रौपादानिकस्वत्वबोधकत्वाऽभावात्। सम्प्रदानत्वस्यैव सम्भवात् वाप्यादौ च तदावश्यकत्वात्। देवतादीनां च स्वत्यागे स्वोद्देश्यकत्वबोधकाऽभावात्। अन्यथा तदनधिकारे बीजान्तरकल्पने गौरवात्। तदेवमतिपीडनेन लाघवमेव शरणमित्यलमनेन। वराहपुराणे--

**फाल्गुनादितृतीयायां लवणं यस्तु वर्जयेत्।**
**समान्ते शयनं दद्याद् गेहं चोपस्करान्वितम् ॥**
**सम्पूज्य विप्रमिथुनं भवानी प्रीयतामिति।**
**गौरीलोके वसेत्कल्पं सौभाग्यव्रतमुच्यते ॥**

अत्र तृतीयाव्रतान्तरधर्माऽतिदेशान्नक्तभोजनादिलाभ इति कश्चित्। तन्न। तृतीयाव्रतानां बहूनां सधर्मकत्वेन विनिगमकाऽभावाद्दर्वीहोमवदनातिदेशात्। दर्वीपात्रविशेषः तत्करणको

होमो दर्वीहोमः। तथा चाऽतिदेशः क्वचिद्वाचनिको यथा “स-मानामतरच्छ्येनेन’ क्वचित्तन्नामिकः। तन्नामकत्वेनैव तद्ध-र्माऽतिदशात्। गौणपदप्रयोगस्य प्रयोजनाऽन्तराभावात्। कौ-ण्डपायिनामयनेऽग्निहोत्रपदवत्। तत्र तद्धर्मलाभार्थमेवाऽग्नि-होत्रपदप्रयोगात्। क्वचिन्नयायिकोऽतिदेशः तथा हि “प्रकृति-वद्विकृतिः’ इत्यनेन प्राकृतो धर्मो विकृतावतिदिश्यते साकाङ्क्ष-त्वात्। तत्र च न सर्वस्याः प्रकृतेर्धर्मः स वैविकृतावतिदिश्यते। अतिप्रसङ्गात्। किं तु ययोः प्रकृतिविकृत्योस्तौल्यं तत्प्रकृतिध-र्मस्तद्विकृतौ। अन्यथा विनिगमनासम्भवात्। यथा पार्वणध-र्माणामेकोद्दिष्टेऽतिदेशः प्रमेतोद्देश्यकत्वस्य तुल्यत्वात्। तदङ्गा-नां चाऽऽवाहनादीनामकोद्दिष्टादवप्रसक्तानामप्रतिप्रधाऽपत्तौ प्र-कृतिविकृतिभावस्य तत्प्रसञ्जकस्याऽवश्योपगन्तव्यत्वात्। द-र्वीसाध्यहोमे च न तथा। होमान्तरसमानधर्माऽभावात्। प्र-मेयत्वादेश्चाऽनुष्ठानातन्त्रत्वात्। होमत्वादेरपि नानाहोमान्तर-साधारणत्वेन विनिगमकाऽभावात्। नानाहोमानां नानाकर्मक-त्वात्[1]। तस्मात्दर्वीहोमस्य शुद्धस्यैवाऽनुष्ठानम्। एवं प्रकृतेऽपि बहूनां व्रतानां सधर्मकत्वेन विनिगमकाऽभावेनाऽतिदेशाऽस-म्भवात्तदतिरिक्तकल्पने मानाभावाद्गौरवाच्च न तद्धर्मसम्बन्धः। तदेवमतिपीडनेन विनिगमकाऽभावसम्वलितं लाघवमेव शरण-मित्यलमनेन।

मत्स्यपुराणे –

**ततोऽवतीर्य गुरवे पूर्वमर्घ्यं निवेदयेत्।**



[1]‘होमानामधर्मकत्वात्’ इति पाठान्तरम्।

**ऋत्विग्भ्योऽपरमर्ध्दं च दद्यादुदकपूर्वकम् ॥**

अत्र कश्चित् - यथांशमकैकमेव दानं न तु मिलितोद्देश्यकम्। परिषदऽधिकरणविरोधात्। तथाहि मिलितानामुद्देश्यत्वम्, एकैकं वा? नाद्यः मिलितानामचैतन्येनाऽस्वीकर्तृत्वात्। स्वीकारद्वारासम्प्रदानस्य कारकत्वात्। प्रत्येकं च कर्तृत्वसम्भवेऽपि दातुस्तथाऽनुद्देशात्। स्वीकारमासाद्य तदुद्देशेन त्यागस्य स्वस्वत्वानिवृत्तिपरस्वत्योत्पात हेतुत्वात्। यदि वा न प्राक्स्वीकारापेक्षा सप्रतिपत्तिकस्य त्यागस्यैव दानपदार्थत्वात्। प्रतिपयुत्तरकालीनाऽनुमतेरेवकारकत्वप्रयोजकत्वात्। तथापि मिलितेतदभावादितितन्न 'ग्रहं सम्मार्ष्टि' इत्यत्र गृह्यत इति ग्रहो यज्ञपात्रं तेषां सर्वेषामेव ग्रहत्वेनोपस्थितानां सम्मार्जनाऽन्वयस्तावदस्ति। आकाङ्क्षाऽनुराधेनकत्वस्याऽविवक्षितत्वात्, अनुपादेयसङ्ख्यात्वात्, उपादेयसङ्ख्याया एव तथात्वात्। बाधकाऽभावात्, तस्योपादानार्थत्वात्, कपिञ्जलानीतिवत्। नत्वनुपादेयसङ्ख्याऽपि तथा फ[1]लसम्बन्धमात्रपरत्वात्। वस्तुत उपादेयं विधेयम्, अनुपादेयमुद्देश्यम्, तत्सङ्ख्या न विवक्षिता। स्वर्गकाम इत्यादिवत्। केनचित्कामनाववादिनोपस्थित्यावश्यकत्वात्तत्परत्वमावश्यकम्, एवं च एकत्वादिसङ्ख्यापुंस्त्वादिपरत्वे वाक्यभेदाऽऽपातात्। नन्विदं विधेयेऽपि तुल्यमिति चेन्न विशिष्टस्यैव विधिगोचरत्वात् इति कश्चित्। एवमृत्विक्केनोपस्थितानां त्रयोदशानां दानाऽन्वयो भवेत्। स्वत्वं तु अनवच्छेदनैवोत्पद्यते साधारणधनेष्वविभक्तसोदरवत्। न तु भागशः। भागानां प्रागकरणात्। स्वत्वसङ्कोचाय प्रातिस्विकस्वत्वान्तरोत्पादाय वा विभागादेशनात्। न तु स्वत्वपरिच्छित्यर्थे तस्य विभागफलत्वाऽद-



[1]फलसम्बन्धादिपरत्वात्' इति पाठान्तरम्।

र्शनात्। किं बहुना यस्यैव यत्र स्वत्वं न तत्रैव तदक्षपातमानाऽभावात्। किं च संसर्गोत्तरं विभागे सर्वांशसर्वस्वत्वस्याऽवश्यकत्वात्। मद्धने तवेत्यस्यैव संसर्गपदार्थत्वात्। अन्यथा तदसम्भवात्। इदं त्ववधेयम्। केषुचित्साधारणधनेष्वक्षपातधनाऽन्तरेऽपि विभागः सिद्ध्यति। स्थालोपुलाकन्यायात्। पुलाको भक्तसिक्थम्। तथाहि स्थाल्यामेकोस्मैं-स्तण्डुले पुलाकसम्भवे सर्वेषामेव तथात्वम्। अविशेषादिति प्राञ्चः।

**पुलाकस्तुच्छधान्यम्। पुलाकस्तुच्छधान्ये तु पुलाको भक्तसिक्थके।**

इत्यभिधानात्। तथा च स्थायामेकपुलाकोद्गमने सर्वस्यैव तथात्वमिति तदर्थ इति कश्चित्। नन्वेवं 'परिषदिदत्तमदत्तम्' इति प्रलाप इति चेन्न। बाधकाऽभावे तदवतारात्। बहुसम्प्रदानकदानस्य नानास्मृतिषु दर्शनात्तदनुरोधेन विशेषपरत्वस्यावश्यकत्वात्। किं च यत्र बहुसम्प्रदानकदानेविभागवैषम्यम्। तत्रादावेव दातुस्तथाशयः, प्रतिग्रहाणामपि तथैव स्वीकार इति तादृशं विभागं विना दानं न निष्पद्यत इति तदधिकरणतात्पर्यत्। अन्यथा दृष्टार्थत्वे सम्भवति अदृष्टार्थकल्पनागौरवात्। तदेवमतिपीडनेन लाघवमेव शरणमित्यलमनेन।

जाबालि :-

**सङ्क्रान्तेः पुण्यकालस्तु षोडशोभयतः कलाः।**
**चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरः॥**

ननु दृशेश्चानुपज्ञानशक्तत्वात्तत्काल एवाऽधिकारो भवेत् न तु मज्जनादिकालेऽपीति चेन्न। उपक्रमस्थदर्शनपदाऽनुरो-

धेन गोचरपदस्य तद्योग्यतापरत्वात्। "वेदो वा प्रायदर्शनात् " इति न्यायात्। तदर्थः-प्राये उपक्रमे वेदपददर्शनादुपसंहारेऽपि ऋक्पदादिकं वेदपरमेव। उपक्रमाऽनुराधात्। तथाहि त्रयो वेदा अजायन्त' इत्युपक्रमस्थवेदपदेन वेदनाजनको विधिभाग उच्यते। तदनुरोधादुपसंहारेऽपि उच्चैर्ऋचा क्रियते, उच्चैः साम्ना, उपांशु यजुषाच्चैर्निगदेन" इत्यत्र ऋग्यजुःसामपदैरपि विधिभागाऽभिधानम्। तस्य च करणत्वाऽसम्भवात्। ऋगाद्याम्नातकार्यपराणि ऋगादिपदानि। लक्षणाऽङ्गीकारात्। निगदः सम्बोधनार्थं यजुः। न च वेदपदस्यैव ऋगादिपरत्वमिति वैपरीत्यमेवाऽस्त्विति वाच्यम्। वेदपदस्य प्रथमोपस्थितत्वेन स्वार्थपरत्वात्। तदानीमनुपपत्यभावात्। अक्ताऽधिकरणविशेषश्च वक्ष्यते। तदेवमतिपीडनेनैकपरत्वलाघवसम्वलितमुपस्थितिलाघवमेव शरणमित्यलमनेन।

शङ्खः--

**पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतः क्रमात्॥**
**सपिण्डता निवर्तेत सर्ववर्णेष्वयं विधिः॥**

ननु सपिण्डपदस्यैकपिण्डसम्बन्धपरत्वेऽतिप्रसङ्गात्सप्तान्यतमत्वमुपाधिरित्यवश्यं वाच्यम्। तदेवमर्थादेवाऽष्टमादीनां सापिण्ड्यनिषेधे सिद्धे ऊर्ध्वमित्यादिवैफल्यमितिचेन्न। "न गिरा गिरेति ब्रूयादैरं कृत्वोद्गायति' इतिवत्सम्भवात्। तथाहि "गिरा गिरा च दक्षसे 'इति मन्त्रे ऐरं कृत्वेत्यत एव मन्त्रे तस्याऽन्यथा पाठसिद्धौ न गिरा गिरेत्यनुवादः तद्वन्नाऽपि।

न्यायबललभ्यानुवादत्वसम्भवात्। अन्यथाऽर्थान्तरतात्पर्यान्तरकल्पने गौरवात्। तदेवमतिपीड़नेन लाघवमेव शरणमित्यलमनेन।

ब्रह्मपुराणे-

**अथ भाद्रपदे मासि कृष्णाऽष्टम्यां कलौ युगे।**
**अष्टाविंशतिमे जातः कृष्णोऽसौ देवकीसुतः॥**
**तस्मात्स तत्र सम्पूज्यो यशोदा देवकीतथा।**
**गन्धैर्माल्यैस्तथा धूपैर्यवगोधूमसम्भवैः॥**
**सगोरसैर्भक्ष्यभोज्यैः फलैश्च विविधैः पृथक्।**
**रात्रौ प्रजागरः कार्यो नृत्यगीतसमाकुलः॥**
**अरुणोदयवलायां नवम्यां च ततःस्त्रियः।**
**नयन्ति प्रतिमा ह्येषां नानाविभवसम्भवाः॥**
**नदीतीरं शुभं रम्यं विविक्तं वा महत्सरः।**
**ततः स्नानं प्रकुर्वन्ति स्नापयन्ति च तास्ततः॥**
**ततः प्रविश्य च गृहं यवान्नं भुञ्जते च ताः।**
**युक्तमिक्षुविकारैश्च मध्वाज्यमरिचैः समम्॥**

नन्वधिकारिविशेषाऽश्रवणात्स्त्रीणां च पारणाविशेषापदेशात्स्त्रीणामेवाऽधिकारोपसंहारः अक्ताऽधिकरणाऽनुरोधादिति चेन्न। विशेषात्। तथाहि "अक्ताः शर्करा उपदधाति" "तेजो वै घृतम्' इत्यादौ यद्यपिद्रवद्द्रव्यत्वेनैवाञ्जनसाधनत्वं तथापि घृतस्यैव तत्वमवगम्यते। उपसंहारात्। इत्येवमेतत्। परन्तु तत्र तथैव घृतस्तुतेरनन्यथासिद्धत्वात्। फलान्तराऽभावात्। प्र-

कृते तु न तथा अधिकारिकल्पनाऽवसरे पुंस्त्रीसाधारण्येनैवकल्पनात् 'नरो वा यदि वा नारी" इत्यभिधानाच्च। उपसंहारानुरोधेन चाङ्गविशेषस्यस्त्रीनिष्पाद्यत्वाऽवगमात्। अन्यथा स्त्रीमात्राऽधिकारोऽपि न स्यात्। विधवायामधुभोजननिषेधात्। एवं शूर्पेण जुहोति तेन ह्यन्नं क्रियते " इति श्रुतौ तेनेत्यनन्यथा सिद्धहेतुमन्निगदस्वरसात्। तस्यैव होमाङ्गत्वम्। अन्यथा तदभिधानवैफल्यादितिसिद्धान्तः। एतेन 'वेदो वा' इत्याधिकरणविरोध इत्यपि निरस्तम्। अनन्यथा सिद्धस्तुतिविरोधेन तदनवतारात्। तदेवमति पीड़नेनाऽनन्यथासिद्धस्तुतेस्तत्परतालाघवमेवशरणमित्यलमनेन।

शातातपः-

**वशिष्ठोक्तो विधिः कृत्स्नो द्रष्टव्योऽत्र निरामिषः।**
**अतःपरं प्रवक्ष्यामि विशेष इह यो भवेत्॥**

ननु मधुन आमिषत्वेऽपि पिण्डॉश्च दधिमध्वक्तान्' इत्यादिना पिण्डेमधुविधानात्, तस्य श्राद्धशेषकर्तव्यत्वात्। श्राद्धेऽपि तत्सम्बन्धः फलचमसवत्। इति चेन्न। वैषम्यात्। तद्यथा राजन्यकर्तृके ज्योतिष्टोमे "फलचमसमस्मै भक्ष्यं ददाति" इत्यनेन वटप्ररोहचूर्णरूपचमसस्य ऋत्विग्भक्ष्यत्वं विहितं तच्चप्रतिपत्तिरूपं परिशेषात्। प्रतिपत्तिश्च होमशेषस्य, इति चमसस्य होमद्रव्यत्वमर्थात्। प्रकृते तु पिण्डस्य श्राद्धशेषद्रव्यत्वेन श्राद्धपिण्डसजातीयद्रव्यकत्वमायातु। न तु पिण्डविशेषणीभूतद्रव्यकत्वम्। मधुना विनाऽपि पिण्डसम्भवात्। ननु ज्योतिष्टो-

मेसोमद्रव्यकत्वेन व्यवस्थितेऽपि राजन्यकर्तृके तस्मिन्नैमित्तिके न च मसेनसोमवाधवनैमित्तिकेन मधुनाश्राद्धद्रव्यान्तरबाध इति चैन्न। उक्तोत्तरत्वात्। मधुनो द्रव्यान्तरविशेषणत्वेन प्रधान-द्रव्याऽबाधकत्वात्। भवति च मासिकसप्तदशत्वेन षोडशत्व-बाधः। उक्तं चैतत्। अन्यथा यागे द्रव्यान्तरकल्पनागौरवात्। तदेवमतिपीडनेन विशेषाऽभिधानसम्वलितं लाघवमेव शरण-मित्यलमनेन।

देवलः-

**तिलांश्च विकिरेत्तत्र परितो बन्धयेदजान्।**

**असुरोपहता भूमिस्तिलैः शुद्ध्यत्यजेन च ॥**

नन्वजेनेत्येकवचनादेकाऽजवन्धनमति चेन्न। अ-जानिति विधिविरोधात्। अजेनेत्यस्य फलसम्बन्धमा-त्रपर[1]त्वेऽवयुत्याऽनुवादरूपत्वात् "एकं वृणीत द्वौ वृणीते त्रीन्वृणीते न चतुरो न वा पञ्च" इतिवत्तत्र नानाविधीगौरवेण श्रीनित्येवविधिः[2]। एकमित्यादौ अवयुत्य पृथक्कृत्य तदेक-देशानुवादः। त्रयाणां मध्ये एकद्व्यादेरप्यनुप्रवेशात्। एवं क्वचिदर्थवशप्राप्तस्याऽनुवादः। यथा "होमं कृत्वा निर्वपेत्" तत्र होमपदनैव[3] क्षेपलाभः। क्षेपाऽवच्छिन्नत्यागस्यैव होम-पदार्थत्वात्। अतोऽर्थप्राप्ताऽनुवादो निर्वपातरगतिकत्वात्। यथा वा "हिरण्मयौ प्राकाशावध्वर्यवे ददाति" तत्र प्रकाशस्व-

[1]'त्वेनाऽवयु' इतिपुस्तकान्तरे पाठः।

[2]'श्रीनित्यत्रविधिः' इति पुस्तकान्तरे पाठः।



[3]'क्षपलाभातक्षेपा' इति पुस्तकान्तरे पाठः।

वलक्षणसम्बन्धोऽध्वर्यर्विधीयते। चतुर्थी विभक्त्यनुरोधात्। स्वत्वं च दानजन्यम्। इत्याक्षेपलम्ये दाने ददातीत्यनुवादः। यागोपकरणस्य सामान्यत एव ऋत्विग्यस्य लाभदनुवाद इति कश्चित्। क्वचिन्निषेधाऽनुवाद यथा "मौद्गश्चरुर्भवति, अयज्ञिया वै माषा:" तत्र विशेषविधरेवेतनिषेधप्राप्तावयज्ञिया इत्यनुवादः। सर्वथाऽनुपादानपरत्वात्। क्वचित्पक्षप्राप्ताऽनुवादः। पक्षप्राप्तिश्चैकदेशप्राप्तिः यथा "ब्राह्मणानामकपिण्डस्वधानामादशमाद्धर्मविच्छित्तिः, आसप्तमाद्दक्वचिच्छित्तिः, आचतुर्थात् पिण्डविच्छित्तिर्भवति अत्र सर्वसाधारणमेवेदं वाक्यम्। अन्यथा क्षत्रादीनां चतुर्थादिष्वपि पिण्डप्रवृत्तिप्रसङ्गात्, तस्मात्सामान्यविधाबेकदेशप्राप्तोऽनुद्यते। तेषां पापाऽधिक्यप्रतीत्यादेः प्रयोजनवसम्भवात्। तदेवं यथायथं लाघवादिकमेवशरणमित्यलमनेन।

ज्योतिषे-

**एकनैकं दिनं त्याज्यं द्वितीयेन दिनत्रयम्।**
**तृतीयेन च सप्ताहं त्यजेदाकालवर्षणे॥**

नन्वेकं दिनं वृष्टिदिनमेव, नोत्तरदिनम्। न च तद्दिनस्य कृषकत्वेन दुष्यत्वाऽसम्भवः तर्हि नावच्छिन्नवर्पणस्य दूपकत्वात्। एकेनेत्यस्यैकदि[1]वसावच्छिन्नवर्पणपरत्वात्। इति चेन्न। "द्वितीयेन दिनत्रयम्' इत्यादौ विध्यनुवादवैषम्यापातात्। तथाहि "अप्राप्तप्रापणं विधिः, प्राप्तस्य पुनरभिधानमनुवादः। न चै-



1 'दिवसाऽवसानावच्छिन्न' इति पुस्तकान्तरे पाठः।

कत्र तदुभयसम्भवः। विरोधात्। प्राप्तत्वाऽप्राप्तत्वयारेकत्राऽसम्भवात्। एवं च दिनत्रयमध्ये तृतीयदिनस्य त्याज्यत्वं विधेयम्। अप्राप्तत्वात्। प्रथमद्वितीययोस्त्वनम्। तद्दिनवृष्ट्या तत्त्याज्यत्वस्य प्राप्तत्वात्। न चैकस्मि[1]न्नपि रूपभेदेनाऽविरोधः' तद्दिनत्वेन प्राप्तावपित्रिवेनाऽतथात्वात्, इति वाच्यम्। तथा सति विधिनिषेधयोरप्यकत्ररूपभेदेन प्रसङ्गात्। किं चैवं वैषम्यदोषाऽभिधानस्य प्रलापत्वप्रसङ्गात्सर्वत्र रूपभेदसम्भवात्। एवं विधिस्पृष्टे निषेधो नेत्यपि प्रलाप एव भवेदिति न किञ्चिदेतत्। नन्वेकस्यैव शब्दस्याऽप्राप्तभागे विधित्वं, प्राप्तांशेत्वनुवादत्वं, बोधकत्वं चोभयांशेऽप्ये केनैव रूपेण, सामग्री सत्वात्। न हि बोध्यत्वमेव विधेयत्वम्। अतिप्रसङ्गात्। इति चेन्न। प्राप्तांशे विधेयान्तराऽनुपहिते विधेस्तात्पर्याऽभावेन बोधकत्वाऽसम्भवात्। अन्यथा भोजनादावपिविधिप्रस[2]ङ्गः। तुल्यत्वात्। ननु भोजनादावपि येन प्राप्तिस्तदन्येनविधेयत्वम्, तृप्तिसाधन-त्वेन प्राप्तावपि फलान्तरसाधनत्वेनाऽप्राप्तत्वादिति चेन्न। तत्राऽपि विशेषणांशस्यैव तत्त्वात्। यत्राऽनुवादस्तत्रनविधिसम्भवः। प्राप्त्यप्राप्तिविरोधात्[3]। अंशभेदेनाऽविरोधेऽपि क्षत्यभावादिति कश्चित्। नन्वेवमपि वृष्ट्यधिकरणदिनस्याऽदुष्टत्वं[4] स्यादिति चेन्न इष्टत्वादिति कश्चित् वस्तुतो 'दण्डाऽपूपन्यायेन तस्यापि दुष्टत्वात्। यथा दण्डसम्बन्धेनाऽपूपस्य दुष्टत्वे दण्डस्य सुतरां दु-

[1]'अपि' नास्ति पुस्तकान्तरे।

[2]''प्रसङ्गानुल्यत्वात्' इति पुस्तकान्तरे पाठः।



[3]प्राप्तऽप्राप्तिविरोधात्' इति पुस्तकान्तरे पाठः॥

[4]'दिनस्यदुत्वंनस्यात्' इति पुस्तकान्तरे पाठः।

ष्टत्वम्। अन्यथा तत्सम्बन्धेनाऽन्यस्य तत्त्वाऽयोगात्। किं बहुना कैमुतिकन्यायस्याऽप्यत्राऽवतारसम्भवः[1]। तत्सम्बन्धनोत्तरदिनमपि दुष्टं किमुत तद्दिनमिति किमुतेति विकल्प्याऽऽपादनात्[2]। तेदवमतिपीडनेन प्राप्तभागस्याऽविधेयत्वे लाघवमेवशरणमित्यलमनेन।

मनुः -

**सर्वेषामर्द्धिनो मुख्या द्वितीयाश्च तदर्ध्दिनः।**
**तृतीयिनस्तृतीयाश्च चतुर्थाश्चैकपादिनः॥**[3]

ननु गोशते षोडशानामृत्विजां मध्ये मुख्यादीनामर्द्धादिदानमुक्तं, विशेषश्च नोक्तः तत्कथमध्यवसायः ? इतिचेन्नविशेषाऽनुक्तौ समभागौचित्यात्। 'समं स्यावश्रुतत्वात्" इति न्यायात्। वैषम्ये मानामवात्, अतिप्रसङ्गात्, सङ्ख्यावैषम्यकल्पने[4] गौरवात्। नन्वर्ध्दादीनां पञ्चाशदादिरूपाणां समविभागाऽसम्भव इति चेन्न, अर्ध्दशब्दस्य। विषमांशे[5]ऽपि साधुत्वात् "पुंस्यर्द्धार्द्धं समेऽशके" इत्यनुशासनस्वरसात्। एवञ्चाऽर्द्धपदमष्टचत्वारिंशद्रोपरं वक्तव्यम्। द्वादश द्वादशाद्येभ्यः, षड् षड् द्वितीयेभ्यः, चतस्रश्चतस्रस्तृतीयेभ्यः तिस्रस्तिस्रः परेभ्यः' इति का-

[1]'सम्भवात्' इति पुस्तकान्तरे पाठः।

[2]विकल्पोपादानात्' इति पुस्तकान्तरे पाठः।

[3]मुद्रितमनुस्मृतिपुस्तके तु-
सर्वेषामर्धिनो मुख्यास्तदर्धनाऽर्धिनोऽपरे।
तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः॥
इति पाठः

[4]'कल्पने मानाभावात्' इति पुस्तकान्तरे पाठः।



[5]'विषमांशेन' इति पुस्तकान्तरे पाठः।

त्यायनस्वरसात्। तदेवमतिपीड़नेन लाघवमेव शरणमित्य-लमेन।

याज्ञवल्क्यः --

**यादिव्यत्यर्घमुत्सृज्य दद्याद्गन्धादिकं ततः।**
**वस्त्रोत्तरं गन्धपूर्वं दत्वा संस्रवणादि च॥**
**पितृपात्रे निधायाथ न्युब्जमुत्तरतो न्यसेत्।**

अत्र प्रथमं पितामहार्घजलशेषस्य[1] पितृपात्रे प्रक्षेप इति कश्चित् तन्न। ''पशूननक्ति' इतिवत्प्रावृत्तिकक्रमविरोधात्। तथाहि "पशूननक्ति, पशुन्प्रोक्षति, पशूनालभते' इत्यत्र पशूनामेकाञ्जनक्रियासम्भवात्, स्वेच्छयैव सप्तदशानां पशूनामञ्जनम्। नियामकान्तराऽभावात्। ततस्तथैव प्रोक्षणालम्भनादि। तत्र प्रथमप्रवृत्तिक्रमस्यैव क्रमनियामकत्वात्। किं बहुना पदार्थानां क्रमाऽनुरोधादपि पदार्थानुसमयस्यैवाऽऽवश्यकत्वात्। एवं च तत्र पदार्थाऽनुसमय एव न तु काण्डानुसमयः। तत्त्वे एकस्यैवाऽञ्जनाभ्युक्षणाऽऽलम्भनाऽनन्तरमपरस्य तानि स्युरिति प्रावृत्तिकक्रमोदाहरणं तन्न स्यादेवेति न किञ्चिदेतत्। तदेवातिपीडनेनोपस्थितिलाघवमेव शरणमित्यलमनेन।

विष्णुः–''वैश्वदेवादन्नादुद्धृत्य पर्युक्ष्य स्वाहाकारैर्जुहुयात्'' नन्वत्रहोमविधानात्सकलहोमधर्माऽतिदेश इति चेन्न। 'प्रकृतिवद्विकृतिः' इत्यतिदेशबलादवहोमधर्मप्राप्तपर्युक्ष्येति विशेषोपदेशस्याऽङ्गान्तरव्यवच्छेदपरत्वात्। नन्वेवमप्यग्निमुपक्रम्यहोम-



[1]प्रथमं प्रपितामहर्घजलशेषस्य पितामहपात्रे तच्छेषस्य पितृ पात्रे' इति पुस्तकान्तरेपाठः।

धर्मकथनादग्नावेवप्रोक्षणादिलाभः। न जलेऽपि इत्यप्राप्तप्रापकत्वमिति चेन्न। होमाधारसामान्यमुपक्रम्य जलादावर्पितद्धर्म[1]बोधनात्। किं बहुना स्वाहाकारैरित्यस्य त्यागव्यवच्छेदार्थत्वमेव। गत्यन्तराऽभावात्। तथाहि "वैकृतो विशेषोपदेशः प्राकृतं क्वचिदन्यथयति विशेषोपदेशबलात्" यथा "शरमयं बर्हिर्भवति" तत्राऽतिदेशबलात्कौशबर्हिः प्रसक्तो शरस्य विशेषत उपादानं तदन्यथयति। अन्यथा तद्वैयर्थ्यात्। क्वचिल्लुम्पति। यथा " पर्युक्ष्य जहुयात्" तत्र विध्यभावात्पर्युक्ष्येत्यत्र विध्यर्थकपदाऽभावात्, विशेषोपदेशबलेनाङ्गान्तरव्यवच्छेदात्। क्वचित्सर्वस्थाने तदेव विधत्ते, गृहमेधिवत्। तथाहि गृहमेधिरिष्टिविशेषः। तत्र "आज्यभागौ जुहोति" इति श्रुतिरस्ति। तत्राऽतिदेशबलादेव[2] दर्शीधर्मस्याऽऽज्यभागनामकहोमस्य प्राप्तत्वाद्विशेषाऽभिधानं तस्यैव सर्वोपकारहेतुत्वं बोधयदङ्गान्तव्यवच्छेदकम्। अन्यथा तद्वैफल्यात्। यथा वा "आधारमाधारयति" तत्राऽऽधारनामकहोमस्याऽतिदेशबलादेव प्राप्तावाज्यभागादिहोमस्थानेऽपि तद्विधानमेव तदर्थः। अन्यथा तदुपादानवैयर्थ्यात्। आधारयतीत्यस्य विध्यर्थत्वम् "ऐन्द्रं दधि भवति" इतिवत्। अन्यथा पूर्वकल्पसम्भेदात्। कश्चित्तु पर्युक्ष्येत्यत्र परिसमूहनादीनामङ्गान्तराणां व्यवच्छेदः आधारयतीत्याज्यभागादिहोमव्यवच्छेदः इति[3] भेदकमुक्तवान्। एवं क्वचित् प्राकृ-

[1]जलाग्न्यायुगपद्धर्म' इति पुस्तकान्तरे पाठः।,

[2]'तत्राऽतिदेशधर्मबलादेव ' इति पुस्तकान्तरे पाठः।



[3]व्यवच्छेदकमुक्तवान्' इति पुस्तकान्तरे पाठः।

तवैकृतसमुच्चयेऽपि। द्वयोरदृष्टार्थकत्वसम्भवात्। आधारादीनां प्रकृतावप्युक्तत्वेन भेदाऽभावात्। न च शरस्य[1] वैकृतस्य प्राकृतसमुच्चयोऽस्तु अदृष्टार्थत्वात्, इति वाच्यम्। शरस्याऽपि बर्हिष्टेनैव[2] विधानात्। नन्वेवं क्वाऽपि न तथा स्यादेवेति चेन्न। "रेखायामवने जयति" इति प्रकृतौ पिण्डपितृयज्ञे श्रुतत्वेऽपि "दर्भेष्ववनिज्य दद्यात्" इति श्राद्धे विशेषोपदेशेऽपि समुच्चयस्वीकारात्। तदेवमतिपीडनेन विशेषविधिरेव शरणमित्यमनेन।

ब्रह्मपुराणे –

**एतद्वः पितरो वास इति जल्पन् पृथक् पृथक्।**
**अमुकाऽमुकगोत्रैतत्तुभ्यं वास इतीरयेत्॥**

ननु समवेतार्थानां मन्त्राणामूहोऽस्तु "अग्नये त्वा जुष्टम्" इत्यादौ सूर्याय त्वा जुष्टम्, इतिवत्। पितर इति बहुवचनं प्रकृतावेवाऽसमवेतारर्थे तत्कथमेकोद्दिष्टे तदूहः। पाशाधिकरणविरोधात्। तथा हि दैक्षे पशावेकपाशिकायां रज्जौ प्रकृतौ "स्वधितिः पाशं प्रमुमोक्तु स्वधितिः पाशान् प्रमुमोक्तु" इति मन्त्रद्वये द्विपाशिकायां प्रयुज्यमाने एकवचनान्तस्योहः। प्रकृतौ समवेतार्थत्वात्। बहुवचनान्तस्य नोह:। प्रकृतावेवाऽसमवेतार्थत्वादिति सिद्धान्तादातचेन्न। एतत् इत्यस्य वीप्साबलेन पार्वणपरत्वे तत्रैवाऽसमवेतार्थत्वेन बहुवचनप्रयोगसाधुत्वात्। नत्वेकोद्दिष्टे, वीप्सायुक्तवाक्यप्रवृत्तेरसम्भवात्। यत्र च स्वभावादेव प्रकृतावपि साधुत्वार्थत्वं तत्रैकोद्दिष्टेऽपि तथा। यथा "शुन्धन्तां पितरः शु-



[1]शरस्य प्राकृतस्य वैकृतसमुच्चयोऽस्तु इति पुस्तकान्तरे पाठः।
[2]बर्हिष्ठेनैव विनिगमकाभावात्' इति पुस्तकान्तरे पाठः।

न्धन्तां पितामहाः शुन्धन्तां प्रपितामहाः" इत्यादौ। तत्रैकोद्दिष्टेऽपि बहुवचनान्तस्यैव पाठः साधुत्वार्थत्वात्। तदेवमति पीडनेनदृष्टार्थत्वलाघवमेवोहः शरणमित्यलमनेन[1]।

याज्ञवल्क्यः-

**आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा।**
**यवैरत्ववकीर्याऽथ भाजने सपवित्रके॥**
**शन्नोदेव्या पयःक्षिप्त्वा यवोऽसीति यवान् क्षिपेत्।**

नन्वावाहनस्य[2] दृष्टार्थत्वम्, स्मृतिसन्तानहेतुत्वात्। इतिकश्चित् तन्न। तिलविकिरणादिपदार्थव्यवहितस्य स्मृतिसन्तानस्य श्राद्धपर्यन्तमनवस्थानात्। अन्यथा वङ्क्र्य[3]धिकरणसिद्धान्तविरोधः[4]। तथाहि सोमयागे प्रकृतौ त्रयः पशवः, दैक्षः सवनीयोऽनुबन्धयश्चतेषुदैक्षः प्रकृतिस्तद्विकृतिः सवनीयादिः। दैक्षं दीक्षावत्वम्। सा च दक्षिणीयेष्टि

जन्यसंस्कारविशेषः। तत्र "दैक्षपशौ षड्विंशतिरस्य वङ्क्रयः' इत्युस्ति तद्विकृतावश्वमेधे च चत्वारिंशद्वाजिनो विश्वबन्धवङ्क्रयः' 'इत्युक्तमतो वैकृतविशेषोपदेशात्प्राकृतधर्मबाध एवेति प्रपञ्चितमेतत्। एवं च पशुः नयनकालानवक्रिमन्त्रस्य पशुपार्श्वस्थिररूपवयुद्धरणकालत्वं दृष्टार्थत्वन्न युक्तम्। व्यवधानेन दृष्टार्थत्वाऽसम्भवाददृष्टार्थत्वे गौरवात्। किञ्च तत्र विजातीयव्यव-

[1]'लाघवमेवशरण' इति पुस्तकान्तरे पाठः।
[2]"यत्वाचाहनस्य' इति पुस्तकान्तरे पाठः।
[3]बङ्क्युद्धरण' इति पुस्तकान्तरे पाठः।
[4]'विरोधात्' इति पुस्तकान्तरे पाठः॥

धानाऽभावात्स्मृतिसन्तानद्वारा तत्सम्भवेऽपि प्रकृते तदसम्भवात्। तदेवमतिपडनेन सत्यपि लाघवे बाध एव शरणमित्यलमनेन।

जावाल :-

**आमश्राद्धप्रदोऽनग्निः सर्वत्रैव मनीषिणः[1]।**
**तेनाऽग्नौकरणं कुर्यात्पिण्डांस्तेनैव निर्वपेत् ॥**

अनग्निःश्रौतस्मार्ताग्निरहित इति कश्चित् तन्न। पाकशक्त्यभावपरत्वात्। सर्वशक्तिमूलत्वेनोपपत्तौ मूलाऽन्तरकल्पने गौरवात्। तथाहि काम्ये तावत्फलकरणीभूतस्य विषयत्वम्। फलस्य स्वर्गादेः साध्यत्वे यागस्य फलसाधनत्वेन बोधकत्वे बाधकाभावात्। करणत्वं च सर्वाऽङ्गसम्पन्नस्यापवादकाऽभावात्। सेतिकर्तव्यताकस्य साधनस्थ साध्ये व्यापारात्त दसम्पत्तावकरणेऽपि क्षत्यभावात्। सर्वाङ्गसम्पत्तिकाल एव तत्करणसम्भवात्। तथैव तिर्यगधिकरणसिद्धान्तात्। नित्यनैमित्तिकयोस्तु विषयीभूतस्य करणत्वम्। फलसम्बन्धाऽभावात्। विषयभूतं च शुद्धं प्रधानमेव। अङ्गनां तदाऽनुपस्थितत्वात्। अकरणे निन्दाऽर्थवादात्। सन्ध्यावन्दनवत् तत्करणस्याऽवश्यकत्वात्। पश्चदगानि जिज्ञासोरशक्यमङ्ग -मकुर्वतोऽपि सर्वाऽङ्गशक्तेरसम्भवे यत्किञ्चिदङ्गबाधेऽपि तदाचरणम्। अपराधाऽभावात्[2]। अन्यथा पापप्रसङ्गात्। पश्चात्साङ्गोपसंहाराऽसामर्थ्यध्वगतेऽपि न निवर्तते। प्रथमप्रतीतप्रधानकर्तव्यताबाधात्।

---

[1] 'सर्व एव' इति पाठः पुस्तकान्तरे पाठः।

[2] 'अपवादाभावात्' इति पाठः पुस्तकान्तरे।

तदेवमतिपीडनेन तदाऽवश्यकत्वसम्वलितं दृष्टार्थत्वलाघवमेव शरणमित्यलमनेन ॥

मनुः-

**यथा चैवाऽपरः पक्षः पूर्वपक्षाद्विशिष्यते ।**
**तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते ॥**

ननु दिनद्वयेऽपराह्णलाभे किं विनिगमकमित्युभयत्र श्राद्धं स्यादिति चेन्न। सकृत्करणेनैव शास्त्रार्थ निर्वाहात्। तच्च प्रथमदिवस एव। कपालाऽधिकरणन्यायात्। तथाहि "पुरोडाशकपालेन तुषाऽनुपवपति" इति श्रुतौ कपालेन तुपोपवापनमुक्तम्। तत्र सप्तदश[1]कपालमध्येऽनध्यवसितौ प्रथमोपस्थितकपालान्वयः। लाघवात्, प्रथमोपस्थितत्वात्, नियामकान्तराऽभावात्। किं च "ऐन्द्रं दधि भवत्यमावास्यायामैन्द्रं पयो भवत्यमावास्यायामग्नीषोमीयः पुरोडाशो भवत्यमावास्यायामाग्नेयोऽष्टाकपालो भवति पौर्णमास्यामग्नीषोमीयः पुरोडाशो भवति पौर्णमास्यामुपांशुयाजमन्तरा यजति" इत्युत्पत्तिविधौ तद्विकृती" वैष्णवया। वैष्णव एकः कपालः" इतिश्रुतेः कपालधर्मप्रसक्तौ विकृतित्वे दर्शा[2]दिधर्मग्राहिणि कपालत्वसाधादेकस्य कपालस्याऽऽकाङ्क्षायां प्रागुक्त[3]पौर्णमासधर्मेणैव निराकाङ्क्ष कपालान्तरधर्मो नान्वेति। गौरवात। इत्युदाहरण-

---

[1]'कपालस्य मध्ये' इति पुस्तकान्तरे पाठः।
[2]'ग्राहि कपाल' इति पुस्तकान्तरे पाठः।
[3]प्रागुपस्थितपौर्ण' इति पुस्तकान्तरे पाठः।

मेतत्[1]। अस्मिन्नेवाऽर्थे मुख्यत्वात्पूर्वदेशनाल्लोकवादिति निबन्धारः। तथाहि-"आग्नावैष्णवमेकादशकपालं निर्वपेत्। सङ्ग्रामे सर[2]स्वतीयस्याऽऽयस्य यजेत" इतिविधावुभयधर्मप्राथम्याऽऽकाङ्क्षा यामानावैष्णवधर्मस्यैव प्राथम्यम्। प्रथमोपस्थितत्वात्। लोकवदिति। यथा लोकेऽप्युपन्यस्तसाक्षिद्वये एकः प्राथमिकः साक्षी यथाऽभिधत्ते परश्चेत्तद्विपरीतं तदा[3]प्रथमाऽभिधानस्यैव निश्चायकत्वम्। प्राथम्यादित्यलं विस्तरेण। तदेमवतिपीडनेनोपस्थितिलाघवमेव शरणमित्यलमनेन।

कात्यायन :-

**यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः।**
**दन्तान्प्रक्षाल्य नद्यादौ गेहे चेत्तदमन्त्रवत्।।**

ननु 'गेह' इत्यभिधानाद्बहिरुद्धृतोदकस्नानमपि समन्त्रकं भवेदिति[4]चेन्न। नद्याद्यभाव विधानात्। गेहस्य गवामयने अहस्त्ववदविवक्षाऽसम्भावात्। तथाहि-"प्रजाकामा गवामयनमुपेयुः" इति विधिरस्ति। तत्र प्रकृतिभूते द्वादशाहे "ऐन्द्रवायवानो प्राणीयोदयनीयौ आद्यन्ते अहनी दशमश्चाहः" इतिद्वादशाहे श्रुतम्, तत्रैव तेषां "ऐन्द्रवायवाग्रं प्रथममहस्ततः शुक्राग्रं ततश्चाश्रयणाग्रम्। इत्येवमहःपूरणमुक्तम्। एवं विंशतिदिनादे-

[1]'इत्युदाहरणम्। अस्मि' इति पुस्तकान्तरे पाठः।
[2]'सरस्वतीमप्याज्यस्य' इति पुस्तकान्तरे पाठः।
[3]'धर्मस्य प्रापकस्याकाङ्क्षा' इति पुस्तकान्तरे पाठः।
[4]'अपरश्चाद्विमारति तथा' इति पुस्तकान्तरे पाठः।

रपि द्वादशाहविकृतित्वेनाऽतिदेशबलादहःपूरणं वाच्यम्। तथा च प्रकृतावहस्त्वविवक्षायां दिनक्रमेण विंशत्यादिदिनेऽपि पूरणं भवेत् तत्र च तावतीनां देवतानामसमावेशः, तेन प्रकृतौ त्रित्रिदिना क्रमेण विकृतौ स्वस्वभागक्रमेण सिद्ध्यर्थमहस्त्वमविवक्षितमित्यर्थः। तदेवमतिपीडनेन श्रुतपदार्थाऽविवक्षायां बाधकसत्वमेव शरणमित्यलमनेन।

ब्रह्मपुराणे -

**स्निग्धरक्तेन वर्णेन क्षत्रियस्य प्रशस्यते।**

**काञ्चनाभेन वैश्यस्य कृष्णेनाऽप्यन्त्यजन्मनः ॥**

तत्र विशेषोपदेशबलादधिकारसिद्धौ तदनुकूलविद्याकल्पनं "निषादस्थपतिं याजयेत्" "वर्षासु रथकार आदधीत" इतिवच्छन्दाऽनुरोधेनार्थकल्पनात्, तस्योपजीव्यत्वात्। यत्तु तण्डुलपदवदविवक्षितार्थमित्य -विद्यपरमेतदिति तन्न। विशेषात्। तथाहि "यस्य निरुप्तं हविश्चन्द्रमा अभ्युदियात्स त्रेधा तण्डलान्विभजेत्" इत्यादौ देवतातो हविर्विभजेदिति सामान्यग्रहणात्, युक्ता तण्डुलपदस्य हविः सामान्यपरता साकाङ्क्षत्वाऽविशेषात्। इह तु न तथा किञ्चिदनिष्टमिति कथमविवक्षाऽस्य। अन्यथा निषादस्थपातरथकारादिपदानामप्यविद्यमात्रपरत्वाऽऽपातात्। नन्ववं निषादस्थपतिपदे षष्ठीसमासादरे रथकारपदे च योगार्थादरे जातिविशेषवतोऽपि तत्त्वं न स्यादिति चेन्न। रूढ्यर्थस्य शीघ्रत्वादिति न किञ्चिदेतत्। तदेवमपदार्थकल्पने गौरवम्, रूढ्यर्थोपस्थितिश्च। एवं च यथायथं शरणमि-

त्यलमनेन।

ब्रह्मपुराणे---

**युवानस्तु गृहे यस्य मृतास्तेषां तु दापयेत्।।**
**शस्त्रेण वा हता ये वै तेषां दद्याच्चतुर्दशीम् ॥**

ननु[1] स्त्रीणां युवमरणनिमित्तकं श्राद्धं न स्यादिति चेन्न। पुंस्त्वस्याऽविवक्षितत्वात्। स्वसम्बन्धि- परत्वात्। हविरुभयत्ववत्। तथाहि 'यस्योभयं हविरार्त्तिमाछेत्स पञ्चशरावमोदनं निःक्षिपेत्" अत्र[2] देवतातो हविर्विभजेदिति सामान्याऽभिधानादुभयत्वमविवक्षितमित्युक्तसमानमेवैतत्। अन्यथा हविष्ट्रोभयत्वयाईयोस्तात्पर्यकल्पने गौरवात्, बाधकस्योक्तत्वात्। तदेवमतिपीडनेन बाधकसत्वमेवाविचक्षा शरणं लाघवं चेत्यलमनेन।

भविष्यपुराणे--

**षष्ठीसमेता कर्तव्या सप्तमी नाऽष्टमीयुता।**
**पतङ्गेपासनायेह षष्ठयामाहुरुपोषणम् ॥**

नविकस्मिन्नेव दिने सम्पूर्णतिथिलाभे व्रतलोप: स्यात् षष्ठीसमेत सप्तम्यलाभात्। इति चेन्न। अपेक्षितविधित्वात्। तथाहि 'यद्येकस्मिन्नेव दिने तल्लाभस्तदाऽऽकाङ्क्षैव नाऽस्ति वैषम्याऽभावात्। यदातूभयस्मिन दिने तल्लाभस्तदोभयस्मिन् दिने तत्करणप्रसक्तौ[3] तदवतारः।। स कृत्करणनैव शास्त्रार्थनिर्वाहात्[4]। तदेवमतिपीडनेनाऽऽकाङ्क्षासासमान विषयत्वलाघवमेव

[1]'नन्वेवं' इति पुस्तकान्तर पाठः।

[2]'निःक्षिपेत्' इत्यत्र 'निर्वत्' इति पुस्तकान्तरे पाठः।

[3]'भयस्मिन्नेव दिने' इति पुस्तकान्तरे पाठः।



[4]'शास्त्रार्थसिद्धः' इति पुस्तकान्तरे पाठः।

शरणमित्यलमनेन। ' मत्स्यपुराणेर –

**सम्पूज्य द्विजदाम्पत्यं नानाभरणभूषणैः।**
**वृषोत्सर्गं च कुर्वीत देया च कपिला शुभा ॥**

ननु फलाऽश्रषण दूषोत्सर्गादीनां नित्यत्वमिति चेन्न। विश्वजिन्न्या येन स्वर्गफलकत्वकल्पनात्। तथा हि कालचीप्सानिन्दार्थवादादिकमन्तरेण विधरिष्टसाधनत्वाऽवगतौ तदिष्टविशेषाऽऽकाङ्क्षायां प्रामपश्वादीनां गौणत्वात् स्वतः फलं[1] स्वर्गमोक्षावुपस्थितौ। तत्र मोक्षस्याऽभावरूपत्वेन गुरुत्वात् स्वर्ग एव फलं कल्प्यते, लाघवात्। यदि च निन्दार्थवादस्तदा न फलकल्पनम्, प्रवृत्तेरन्यथोपपन्नत्वात्। ननु कार्यताविधिपक्षे कथमेतत् ? तदकरणे पापद्वारा नरकहेतुत्वस्याऽपि सम्भवेन विनिगमकाऽभावादिति चेन्न। तस्याऽनुपस्थितत्वात्। यागविशेषस्य चोपस्थितत्वेन तत्र फलकल्पनौचित्यात्। यत्तु फलकल्पने गौरवम्। कार्यताज्ञानस्यैव प्रवर्तकत्वात्। एवं च काम्यप्रकरणे तदभिधानमेव तदरतारबीजम्। प्रकरणस्य बलवत्वादिति, तन्न। पापाऽनुत्पादकल्पनाऽपेक्षया फलकल्पनस्यैव लघुत्वात्। तदेवमतिपीडनेन लाघवमेव शरणमित्यलमनेन।

शातातपः -

**अर्वाक सम्वत्सरावद्धौ पूर्णे सम्वत्सरे तथा।।**
**ये सपिण्डीकृताः प्रेता न तेषां तु पृथक क्रिया ॥**

ननु सम्वत्सराभ्यन्तरे वृद्धौ सपिण्डने[2] सम्वत्सरान्तविधि-



[1] 'स्वतःप्रयोजनस्वर्गमोक्षायुपस्थितौ' इति पुस्तकान्तरे पाठः।

[2] 'सपिण्डनाऽनुवादेन' इति पुस्तकान्तरे पाठः।

विरोध इति चेन्न। सम्वत्सराभ्यन्तरे सपिण्डनाऽनुवादेन तद्विधेरपि कल्पनात्। तेन विनाऽनुवादासम्भवात्। चतुरवत्तं पञ्चावत्तं वा जुहोतीतिवत्।

चतुर्द्धा पञ्चधा वा पुरोडाशखण्डनाऽनुवादेन तन्मूलविधिकल्पनात्। तेन विना तदसम्भवादिति न किञ्चिदेतत्[1]। सपिण्डनमित्यनुवृत्तौगोभिलः "पूर्णे सम्वत्सरे षण्मासे त्रिपक्षे[2] यदहर्वृद्धिरापद्यते" नवममासेऽपीति कश्चित्। नन्वेषं मासिककालबाधादनाचरणमेव तेषामिति चेन्न। सपिण्डनाऽपकर्षे शेषमासिकानामप्यपकर्षात्। "तिष्ठन्तं पशुं प्रयजन्ति" इत्यत्र प्रयाजापकर्षे हविरासादनादितदन्तकाऽपकर्षवत्'[3] तथाहि एकादशाहश्राद्धस्याद्यत्वे सपिण्डनस्यान्त्यत्वे शब्दादेव सिद्धेऽर्थान्मासिकानां मध्यत्वसिद्धौ तदन्तापकर्षे तदाद्यानां मासिकानामप्यपकर्षः अन्यथा तेषां मध्यत्वासम्भवात्। किं च पाडशश्राद्धप्रयोगविध्यैक्यबलादपि क्रमकल्पनसम्भवात्[4]। एवं क्वचित्तदाद्यपकर्षणापितदन्तापकर्षः तुल्ययुक्तिकत्वात्। एवमुत्कर्षोऽपि। यथा-"आग्निमारुता दूर्ध्वमनुयाजैश्चरन्ति" इत्यादौ अनुयाजस्य प्रथमोत्पत्तिकस्योत्कर्षात् सूक्तवाकादीनां मध्योत्पत्तिकानामुत्कर्षः तुल्ययुक्तिकत्वात्। वत्सराभ्यन्तरऽधि मासपाते मासिकवृद्धौ सपिण्डनवृद्धिवत्। तदेवमतिपीडनेन प्रयोगविच्चैक्यलाघवमेव शरणमित्यलमनेन। उशना :-

**श्वः कर्ताऽस्मीति निश्चित्य दाता विप्रान्निमन्त्रयेत्।**
**निरामिषं सकृद् भुक्त्वा सर्वभुक्तजने गृहे।।**

---

[1]'तदभावादिति' पाठः पुस्तकान्तरे।

[2]त्रिपक्ष घा यदही' इति पुस्तकान्तरे पाठः।



[3]'तदन्ताऽपकर्षवत्' इति पुस्तकान्तरे पाठः।

[4]'क्रमकल्पनात' इति पुस्तकान्तरे पाठः।

ननु[1] निमन्त्रणाऽभावे निरामिषसकृद्भोजनमपि नास्ति त्त्वाबलेन तयोरङ्गाङ्गि भावावगमादिति[2] कश्चित्। तन्न। "त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति" इत्यत्र यूपपरिव्याणस्य पशूपाकरणाङ्गतापत्तेः तदुभयम[3]धिकृताधिकारत्वादकाङ्गमिति चेन्न। अधिकृताधिकारित्वेन 'निरामिषसकृद्भोजनानमन्त्रणयोरपि समानत्वात्। त्त्वश्चनन्तर्य[4]समर्थत्वेनाताबोधकत्वेसामाऽभावात्। फलवत्सन्निधावफलत्वस्य तत्र तन्त्रत्वात्, समानकर्तृकत्वम्य प्रयोगैक्येन सम्भवात्। एवं राजसूये कश्चिदभिषेचनीयाख्यः सोमयागोस्ति तत्सन्निधिपठितं च "अक्षैर्दीव्यति जिनाति[5] राजन्यं शौनःशेपमाख्यापयति" इत्यत्र देवनादीनां राजसूयाङ्गत्वम्। राजसूयस्य प्रस्तुतत्वात्। तत्कथम्भावाकाङ्क्षायामेव तदवतारात्। उक्तं च भट्टपादेन-

**अविच्छिन्ने कथम्भावे प्रधानस्यह पठ्यते।**
**अविज्ञातफलं कर्म तस्य प्रकरणःङ्गता ॥**

तदेषमतिपीडनेन लाघवमेव शरणमित्यलमनेन।

कात्यायनः–

**स्वपितृभ्यः पिता दद्यासुतसंस्कारकर्मणि।**
**पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात् ॥**

ननु पिण्डानित्यभिधानात् पिण्डदानमेव मुख्यं श्राद्धमिति

---

[1]'यत्नु निम' इति पुस्तकान्तरे पाठः।

[2]'भावोपगमा' इति पुस्तकान्तरे पाठः।

[3]'नत्र द्वयम' इति पुस्तकान्तरे पाठः।

[4]'नन्तयशक्तत्वनाऽलतावोधन' हात पुस्तकान्तरे पाठः।



[5]'राजन्यं जिनाति' इति पुस्तकान्तरे पाठः।

चेन्न। तद्धीनेऽपि नित्यश्राद्धादौ तत्पदप्रयोगात्। पिण्डानित्य-नेनाङ्गमुखेन प्रधाननिर्देशात्। फलचमसेनेव ज्यातिष्टोमस्य त-थैव सिद्धान्तात्। तथाहि ज्योतिष्टोमे सोमद्रव्यकत्वस्थितौ राज-न्यकर्तृके तस्मिन् "फल चमसमस्मै भक्षं ददाति" इत्यत्र शेषभ-क्षणस्याङ्गस्य चमसनिष्पाद्यत्वे यागेऽपि वटप्ररोहचूर्णरूपचम-सविधिः। अर्थात् चमसरूपभक्ष्यदानवि. धिमुखेन ज्योतिष्टोमे प्रधाने तव्यकत्वलाभात्। किं च "सोमं पिबति" इति यागशे-षरूपसोमनामकलता विशेषसत्वपानमुखेन ज्योतिष्टोमो विधी-यते। "यस्य पिता पितामहो वा न सोमं पिबति स व्रात्यः[1]" इति निन्दार्थवादस्यापि तत्परत्वात्। अन्यथा पानस्यादृष्टार्थता-पातात्। तदेवमतिपीडनेन द्रव्यान्तरादिकल्पना गौरवादुत्पत्ति लाघवमेव[2] शरणमित्यलमनेन।

याज्ञवल्क्यः–

**सव्याहृतिं च गायत्री मधुवाता इति तृचम्।**
**जप्त्वा यथासुखं वाच्यं भुञ्जीरस्तेऽपि वाग्यताः॥**

कात्यायनकल्पे अयं जपो नास्त्यनभिधानादिति कश्चित्। तन्न "सर्वशाखाप्रत्ययमकं कर्म्म" इति सिद्धान्तात, नानाख्या-नोक्तविधनुवादादिना समुचितस्य श्राद्धस्य कर्मण एकत्वावग-मात्, तस्य च नानाशाखापूरणीयेतिकर्तव्यताकत्वात्। अन्यथा वाक्यभेदमूलादिभेदकल्पनाप्रसङ्गात्। शब्दान्तराभ्याससंख्या-गुणप्रकरण नामधेयानामेव कर्मभेदकत्वात्। तत्र शब्दान्तरं

[1]'भवति' इत्यधिकं पिबति' इत्यस्याग्रे पुस्तकान्तरे।

[2]'द्रव्यान्तरकल्पनागौरवादुपात्ते लाघवं' इति पुस्तकान्तरे पाठः।

यथा - जुहोति[1], यजति, तेषां लाकेऽर्थभेदावगमात्। शब्दान्तरस्यैव तद्भेदकत्वम्। तदुक्तं—

**संज्ञानदीव्यवच्छिन्नो यजिः पूर्वे न धावति।**

**न च पूर्वे तमित्येवं[2] बलादर्थान्तरं गतः।।इति।।**

अभ्यासो यथा-'इडो यजति' 'समिधो यजति' तत्र लोकेऽर्थभेदानवगमादेकस्याऽपि नानाना[3]मकत्वसम्भवनाभ्यासस्यैव तत्त्वात्। संख्या यथा- "सप्तदश प्राजापत्यान्पशूनालभेत" इति। अत्र प्रकृतावग्नीषोमे पशुहोमे एकादशावदानमुक्तम्। अतस्तद्विकृतावपि तत्त्वं प्राप्तम्। तश्चैकपशुनैव। अतो बहूनां पशूनां नैकयागान्वयः। अवदानाधिक्यप्रसङ्गात्, पशुसंख्याभेदस्यैव[4] भेदकत्वम्। गुणो यथा - "तप्ते पयसि दध्यानयति" इत्यादौ[5]। तत्र[6] "वाजिभ्यो वाजिनम्" इतिद्रव्य रूपगुणभेदस्य[7] तद्भावत्वाद्वैश्वदेवयागे तदाकाङ्क्षाऽभावात् गुणानां समुच्चयविकल्पादिसम्भवे बीजाभावात्। प्रकरणं यथा-"मासमाग्निहोत्रं जुहोति' अत्राऽग्निहोत्रपदप्रयोगऽपि प्रकरणभेदादयनयागपरत्वात्। नामभेदो यथा-"अथैष ज्योतिर्विश्वज्योतिः सर्वज्योतिः" इति। तत्र नामभेदस्यैव तथात्वम्। कश्चित्तु आकाङ्क्षामूलकोऽयं नयः "अनुक्तमन्यतोग्राह्यम्" इत्येकवाक्यताबलात्।

**यन्नाम्नातं स्वशाखायां पारक्यमविरोधि च।**

[1]'जुहोति' इत्यस्याने 'ददाति' इत्यधिकं पुस्तकान्तरे।

[2]'पूर्वस्तमि' इति पाठः पुस्तकान्तरे।

[3]'नानानामसम्भवना' इति पुस्तकान्तरे।

[4]पुस्तकान्तरे 'पशुसंख्याया एवं भेद' इति पाठः।

[5]'नयति' इत्यस्याग्रे सा वैश्यदेव्यामिक्षा' इत्यधिकं पुस्तकान्तरे

[6]'तत्र' इत्यत्र 'अत्र' इति पाठः पुस्तकान्तरे।



[7]'गुणभेदाद्वैश्वदेवयागे' इति पुस्तकान्तर पाठः।

**विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥ इति ।।**

समानमूलकमेतदित्याह । तदेवमतिपीडनेन मूलाभेदादिकल्पनालाघवमेव शरणामित्यलमनेन ।

मनुः--

**सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी ।**
**पिण्डश्चोदकदानं च शौचाऽशौचं तदाऽनुगम् ॥**

समान एकः पिण्डः शरीरं सम्बन्धि येषां ते सपिण्डा । ननु योगो यमतिप्रसक्तः, अष्टमादेरपि तथात्वादिति चन्न । गवामयनवदुपाधिसम्भवात् । तथाहि "द्वादशाहेन यजेत" इत्यत्र प्रायणीयोदयनीयावाद्यन्ते अहनी गवामयने चेति श्रुतम् । तत्र प्रयन्त्यहान्यनेनेति[1] प्रायणम् । उदयन्त्यहान्यननेत्युदयनम् । तत्र छप्रत्ययेन प्रायणीयोदयनीपदे सिद्धे । एवं च पञ्चाहद्व्यहत्र्यहेष्वपि उपक्रमोपसंहारदिने प्रायणीयोदयनीये प्रसक्ते । तेन द्वादशाहिकगवामयनिकाद्यन्ताहान्यतरत्वमुपाधिः । अतो नान्यत्राद्यन्ताहे अतिप्रसङ्गः । तथाऽत्राऽपि बीजिनमारभ्य सप्तान्यतमत्वमुपाधिः स एव शक्यो नाष्टमादिः । अन्यथा नियामकान्तरानुसरणगौरवात् । यत्तु पिण्डो निर्वाप्यः तत्सम्बन्धो दातृत्वेनोद्देश्यत्वेन वा । स च सप्तानामेवेति[2]। तन्न । यत्र पिता पितामहो वा जीवति तत्राष्टमादेरपि तत्सम्बन्धित्वात् । तदेवमतिपी-

---

[1]'प्रयान्त्यनेन' इति पुस्तकान्तरे पाठः । परं तु सोऽपपाठ एव । प्रयान्त्यनेनेतिव्युत्पत्ती प्रयाणमिति स्यान्न तु प्रायणमिति । अत एवं "अपि वा सत्रकर्मणि गुणार्थपा श्रुतिः स्यात्" (पू० मी० ७-३-५) इति सत्र शबरस्वामिभिः प्रयन्त्यनेनेति प्रायणीयमिति व्युत्पादितम् ।



[2]'सच' इत्यत्र 'तच्च' इति पुस्तकान्तरे पाठः ।।

ऽनेनानन्यगतिकत्वसम्वलितं लाघवमेव शरणमित्यलमनेन ।

भविष्यपुराणे--

**श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी ।**

**परस्परविरोधे तु न्याययुक्तं प्रमाणवत्[1] ॥**

यथा "औदुम्बरी स्पृष्टोद्गायति" इति श्रुतिः "सर्वा औदुम्बरी वेष्ठयितव्या" इति स्मृतिः । अनयोर्विरोधे स्मृतेरन्यथात्वम् । बहुभागवेष्ठनपरत्वात् । श्रुतेरुपजीव्यत्वेन बाधायोगात् । अन्यथा स्वोपजीव्यबधि स्वबाधस्यापि प्रसङ्गात् । तथाचातिगौरवात् । यद्यपि स्मृतिरपि वेदमूलैवेति विनिगमकाभावः । तथापि सा श्रुतिरनुमेया न प्रत्यक्षा । न च प्रत्यक्षश्रुतिविरोधेन तदनुमानं सम्भवति विरोधात्[2] । श्रुत्यनुमानस्य बिलम्बितत्वेन प्रत्यक्षश्रुतेः प्रागेवार्थावधारणसम्भवात् । नाऽपि षोडशिग्रहणाग्रहणवत् विरोधिश्रुत्यनुमानम् । बाधसापेक्षविधिकल्पना गौरवात् । एवमाचारस्मृत्योर्विराधे स्मृतेर्बलवत्वम् । साक्षात् श्रुत्यनुमापकत्वात् । आचारस्य स्मृतिमनुमाय तदनुमापकत्वात् । उत्सन्नवेदाध्यक्षीकरणायोगात् । तदुक्तं भट्टपादेन-

**तेनाऽचारः स्मृति यावदनुमातुं समुत्सुकः ।**

**मतिलब्धश्रुतिस्तावद्धर्ममेवावधारयेत् ॥**

तदेवमतिपीडनेन लाघवमेवोपजीव्यबाधासम्वलितं शरणमित्यालमनेन ।

स्मृतिः

**प्रयागे वपनं कुर्याद्यायां पिण्डपातनम् ।**

[1] 'प्रमाणवत्' इत्यत्र 'प्रशास्यते' इति पाठः पुस्तकान्तरे ।



[2] 'विरोधात्' इत्यत्र 'बाधात्' इति पाटः पुस्तकान्तरे

**दानं दद्यात्कुरुक्षेत्र वाराणस्यां तनुं त्यजेत् ॥**

नन्वत्र विधौ फलाऽश्रवणात् विश्वजिद्वत्फलकल्पनमिति चेन्न ।।

**किं गयापिण्डदानेन काश्यां वा मरणेन किम् ।**

**किं कुरुक्षेत्रदानेन प्रयागे वपनं यदि ॥**

इतिश्रवणात्। रात्रिसत्रवदार्थवादि कफलान्वयात्। तथाहि "य एता रात्रीर्यजते तस्य पितरो[1]घृतकुल्या मधुकुल्याः क्षरन्ति " एवं "प्रतितिष्ठन्ति ह वा एता रात्रीरुपयन्ति" इत्याद्यर्थवादोपस्थितस्यैव पितृतृप्त्यादेः फलस्य 'सत्रमुपासीत" इतिविधावन्वयः । साकाङ्क्षत्वात्, विधिवाक्ये फलाश्रवणात, फलान्तरकल्पने गौरवात्, आर्थवादिकफलाभावे विश्वजिन्न्यायाऽवतारात्[2]। तदेवमतिपीडनेन लाघवमेवशरणमित्यलमनेन ॥

लघुहारीतः-

**जपे होमे तथा दाने स्वाध्याये पितृतर्पणे ।**

**जसमा - अशून्यं तु करं कुर्याद्धिरण्यरजनैः कुशैः ॥**

ननु बहुत्वस्य त्रिचतुरादिविश्रान्तत्वादनध्यवसानमिति चेन्न। कपि ञ्जलन्यायेन त्रित्वपरत्वात्। तथाहि "कपिञ्जलानालभेत" इतिश्रुतौ बहुपचनार्थाऽनध्यवसाये प्रथमोपस्थितं त्रित्वमेव तदर्थोऽवगम्यते लाघघात्। अन्यथा विनिगमका[3]भावादननुष्ठानप्रसङ्गात्। एवमिहापि

[1] 'ल्यां' इति पाठः पुस्तकान्तरे ।

[2] विश्वजिद्वतारात्' इति पाठः पुस्तकान्तरे' ।



[3] 'भावनाननुष्ठा' इति पाठः पुस्तकान्तरे ।

कु. शैरिति प्रथमोपस्थितत्रित्वपरम्। तुल्ययुक्तिकत्वात्। एतच्चानध्यवासि. तपरम्। यत्र त्वनध्य[1]वसानं नास्ति तत्र दशादिसंख्यापरत्वमपि, बा. घकाभावात्। अनध्यवसायस्यैव तन्न्यायावतारबीजत्वात्। अत एव "ऋत्विग्भ्यः परमर्द्धै[2] च" इत्यादौ तुलापुरुषे दशर्त्विक्परत्वम्[3]। प्रकरणविशेषादेरेव नियामकत्वात। कश्चित्तु अध्यवसितगोचरत्वेऽपि साकल्य-बोधकमन्तरेणैव तदवतारः " जुहुयाद्वारुणैर्मन्त्रैः" इतिवत्। तत्र चतुःपञ्चदशादिपरन्वषोधकाऽभावादित्युक्तवान्। ननु बहुवचनस्य न त्रित्वपरत्वम्। सामान्यपरत्वे वाधकाऽभावात्। न चाननुगमः। बहुत्वत्वेन सामान्येन सकलपरत्वात्। न चानध्यवसानम्। फलभूमानुसरणादिति चेन्न। नित्येष्वङ्गेषु च तदसम्भवात्। एवं काम्येऽपि। "एकत्र निर्णीतः" इतिन्या-यात्। तदेवमतिपीडनेन लाघवमेव शरणमित्यलमनेन।

ब्रह्मपुराणे

**ब्रह्मरुद्रेन्द्रचन्द्रार्कवसवो मण्डलान्तरात्।**
**निवेदितं नरैरन्नं यस्माद् गृह्णन्ति नान्यथा ॥**

एवं चैषां भोजनकाले बलिदानम्। ननु मण्डलानुवादकमे-वैतदिति चेन्न। बाधकाभावात्। नचैवं वाक्यभेद इति वाच्यम्। सुक्तवाकादिवत् कल्प्यत्वात्। तथाहि "सूक्तवाकेन प्रस्तरं प्र-हरति" इति दर्शपौर्णमासयोः श्रुतम्। तत्र इदं द्यावापृथिवी-

[1]'विनध्यवसायो' इति पाठः पुस्तकान्तरे।

[2]'ऋत्विग्भ्योऽपरमर्द्ध च' इति पाठः पुस्तकान्तरे।

[3]'द्वादशविधपरत्वम्' इति पाठः पुस्तकान्तरे।

त्यादि दर्शपौर्णमासादि[1]देवताप्रकाश 'कसूक्तवाकस्य विच्छिद्य दर्शपौर्णमासयोर्विनियोगः कल्प्यते न तु मिलितस्य। उभयत्र लिङ्गविरोधात्। दर्शदेवताबोधकस्य पौर्णमासे विनियोगायोगात्। दृष्टार्थत्वे सम्भवत्यदृष्टार्थत्वायोगात्, लिङ्गस्योपजीव्यात्वाच्च। नन्वेवं "आहितः पूत आहवनीयो भवति" इत्यादावपि विशिष्टेऽन्वयो न स्यात्। वाक्यभेदस्यैवेष्टत्वात्। एवं सम्भवत्येकवाक्यत्वे "वाक्यभेदो न कल्प्यते" इत्यादितन्मूलकस्मृतिविरोधः स्यादिति चेन्न। बाधकाभावे तथात्वात्। लाघवमूलत्वात प्रामाणिके भेदे तदनवतारात्।

**उपवासात्परं भैक्षं[2] भैक्षात्परमयाचितम्।**
**अयाचितात्परं नक्तं तस्मानक्तेन वर्तयेत् ॥**

इत्यादौ उपवासनक्तादिनानाविधौ वाक्यभेदस्य श्रीदत्तादिना स्वीकारात्। न च नक्तानुवादः उपवासस्तावकवाक्यवैयापातात[3]। पुम्वाक्ये व्यर्थत्वस्यापि जघन्यत्वात्। तदनुरोधेन वाक्यभेदस्यापि न्याय्यत्वात्। तदेवमतिपीडनेनोपजीव्यत्वसम्वलितं लाघवमेव शरणमित्यलमनेन।

सुमन्तुः–

"ब्राह्मणक्षत्रियविशां वृत्तिर्गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणनिष्क्रमणान्नप्राशनचौडोपनयनव्रतचर्य्याध्ययनसमावर्त्तनविवाहसोष्यन्तीयज्ञदानानि" वृत्तिः क्रिया। सोष्यन्ती सुखप्रसवार्थं कर्म। ननु साहच-

[1]'दशौणमासदेवता' इति पुस्तकान्तरे पाठः।
[2]'भैक्ष्यं भक्ष्यात' इति पाठः पुस्तकान्तरे।

[3]'नक्तानुवाद उपवासस्तावकः वैयापातात्' इति पाठः पुस्तकान्तरे।

र्याद्व्रतचर्याध्ययनादीनामपि संस्कारत्वमिति चेन्न। तन्मध्य-पाठस्यावश्यकर्त्तव्यतापरत्वात्। संस्कारत्वस्य "कर्मण्यार-म्भभाव्यत्वात्" इत्यत्र निरस्तत्वात्। कर्मण्यः कर्मयोग्यः। संस्काराधानहेतुरिति यावत्। तादृशो य आरम्भस्तस्मिन्कृते तेनैव भाव्यत्वात् पुनस्तदारम्भासम्भवात् संस्कारवति सजा-तीयसंस्कारान्तरानुत्पादात्, लोके दर्पणादौ तथा दर्शनात्। अपूर्ववत्यपूर्वोत्पत्तौ चाऽविरोधात्। कार्ये च संस्कारस्वरू-पविशेषकल्पने गौरवाच्च कार्यत्वेनैवाऽवगमात्। यद्वा कर्मणि यागादौ समाप्तेऽपि पुनरारम्भे भाव्यत्वम्। बाधकाभावात्। व्रतचर्यादीनां संस्कारकत्वे तदसम्भवात, सकृदारब्धेनैव सं-स्कारसम्भवात् उपनयनादिवत्। लाघवादावृत्तौ मानाभावात्। तदेवमतिपीडनेन लाघवमेव शरणमित्यलमनेन।

भविष्यपुराणे

**हविष्यभोजनं स्नानं सत्यमाहारलाघवम्।**
**अग्निकार्यमधःशय्यां नक्तभोजी षडाचरेत्॥**

ननु[1]

**क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः।**
**देवपूजाऽग्निहवनं सन्तोषः स्तेयवर्जनम्॥**
**सर्वव्रतेष्वयं धर्मः सामान्यो दशधा स्मृतः॥**

इत्युक्तधर्मोपलक्षणमिदम्। अन्यथा वाक्यभेदा[2]पत्तिरिति कश्चित् तन्न। पदाहवनीयविरोधात्। तथाहि "पञ्चाग्नयो भ-



[1]'ननु' इत्यत्र 'परन्तु' इति पाठः पुस्तकान्तरे।

[2]'भेदापातादिति' इति पाठः पुस्तकान्तरे।

वन्ति" तत्र सभ्यावसथ्यौ[1] वैवाहिकावग्नी स्मार्त्तौ श्रौतास्त्रयः प्रथमो गार्हपत्यः[2] । गृहपत्याधानसम्बन्धित्वात्। ततश्चोद्धृत्य दक्षिणाग्न्याहवनीयौ तत्र "आहवनीये जुहोति" इतिसामान्यत आहवनीयस्य होमाङ्गत्वमुक्तम्। ततश्चाश्वमेधे "पदे जुहोति" इतिविशेषविधिना प्रकरणविशेषादिसव्यपेक्षेणाश्वसम्बन्धिपदस्याधारत्वं बोध्यते। अन्यथा विधिवैफल्यात्। न च विकल्पः, व्यवस्थाऽसम्भवात्। ऐच्छिकविकल्पे गौरवस्योक्तत्वात्। व्यवस्थितस्यापि विषयभेदेनैव सम्भवात्। तदेवमतिपीडनेन विशेषविधिसम्वलितं लाघवमेव शरणमित्यलमनेन।

मनुः–

**मौजी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला।**
**क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शण[3]सम्भवा ॥**

मौर्वी मूर्वाभवा[4]। ज्या धनुर्गुणः। ननु मौर्वीपदादेव तल्लाभे ज्यापदवैयर्थ्यमिति चेन्न। तत्रस्थस्यैव मुञ्जस्यैव मेखलाविनियोगलाभार्थं तदुपादानात्। "खलेवाली यूपो भवति" इतिवत्। तथाहि खलेवाली खलनिखातकाष्ठविशेषो मेधिरिति यावत्। श्रुतिस्तस्य[5] यूपसाधनत्वं विधत्ते तत्र द्विविधो यूपसंस्कारः। स्वरूपनिष्पादकोऽष्टार्थश्च। तत्र स्वरूपनिष्पादकस्तक्षणादिरूपः संस्कारोप्यवच्छिद्यते। खले वालीतिविशेषोपादा-

---

[1]’तत्र’ नास्ति पुस्तकान्तरे।
[2]’प्रथमं गार्हपत्यं’ इति पाठ पुस्तकान्तरे।
[3]मुद्रितमनुस्मृतिपुस्तके ’शणतान्तवी’ इति पाठः।
[4]’मुरुभवा’ इत्यपपाठ एव ।।

[5]’श्रुतिस्तत्र तस्य यूपत्वं’ इति पुस्तकान्तरे पाठः।

नात्। यादृशस्य खलेऽवस्थानं तादृशस्यैव यूपत्वावगमात्। अन्यथा तदुपादानवैयर्थ्यात्। न च खलावस्थितकाष्ठस्यैव तादृशादृष्टहेतुत्वमित्येतदर्थं तदुपादानमिति वाच्यम्। दृष्टेनैवोपपत्तावदृष्टकल्पने गौरवात्। अस्तु वा द्विविधोऽपि संस्कारस्तथापि तदवस्थितस्यैवोपादानम्। विशेषाभिधानबलादित्यविवादात्। तदेवमतिपीडनेन विशेषविधिसम्वलितं लाघवमेव शरणमित्यलमनेन।

देवलः– "उच्छिष्टरेतोविण्मूत्रं संस्पृश्योन्मृज्य चाचम्य प्रयतो भवति त्रिः प्रक्षाल्य तं देशम्" नन्वानन्तर्यवाचित्त्वास्वरसादाचमनानन्तरं प्रक्षालनं प्राप्तमिति चेन्न। आर्थक्रमेण शाब्दक्रमबाधात्। "अग्निहोत्रं जुहोति यवागूं पचति" इतिवत्। तथाहि जुहोतीत्यनेन होमद्रव्याकाङ्क्षायां यः वागूपाकविधेरेव तदाकाङ्क्षापूरणक्षमत्वम्। सन्निधानात्, विध्यन्तरा भावात्। अन्यथा नित्यहोमे द्रव्यान्तरं यवागूपाके चादृष्टार्थत्वामित्युभयकल्पने गौरवात्। एवं शाब्दक्रममुपेक्ष्य 'यवागू पचत्यग्निहोत्रं जुहोति' इत्यार्थक्रमादरः। आकाक्षाऽनुरोधात्। इदं चोपलक्षणम्। अन्यथापि शाब्दक्रमोल्लङ्घनं शिष्टाकोपस्वरसात्। शिष्टमनुशिष्टं तदकोपस्तदविरोध इत्यर्थः। तदुक्तं शिष्टाकोपसंज्ञकेऽधिकरणे "वेदं कृत्वा वेदिं कुर्वन्ति" वेदः=कुशमुष्टिः। वेदिः = परिष्कृता भूमिः। अत्र त्त्वाबलेन क्रमलाभेऽपि मध्ये निमित्तोपनिपाते नैमित्तिकमाचरणम्। तद्बोधकस्मृतेर्वेदमूलकत्वेनैकवाक्यतावश्यकत्वात्। शास्त्रस्य क्रमतात्पर्याभावात्। युक्तं चैतत्।

**नैमित्तिकानि कार्याणि निपतन्ति यदा यदा।**

इतिस्वरसात्। वाक्यस्यार्थान्तरादिपरत्वे गौरवात्। तदेवमतिपीडनेन लाघवमेव शरणमित्यलमनेन।

विष्णुः–

**कार्त्तिकं सकलं मासं नित्यस्नायी जितेन्द्रियः।**
**जपन् हविष्यभुक् शान्तः सर्वपापैः प्रमुच्यते॥**

तत्र स्नानं प्रधान, जपादिकमङ्गमिति कश्चित्[1]। तन्न। विनिगमकाभावेन सर्वेषामेव प्रधानत्वात्। अरुणान्यायात्। तथाहि "अरुणया[2] पिङ्गाक्ष्यैकहायन्या गवा सोमं क्रीणाति" तत्रारुण्यादीनां न परस्परमन्वयः "गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात्"[3] इति न्यायात्। तदर्थः- गुणानां=विशेषणानाम्। परार्थत्वात्=विशेष्यसाकाङ्क्षत्वात्। परस्परमनन्वयः सर्वेषां समत्वेन विनिगमकाभावात्। एवं सर्वेषामेवारुण्यादीनां प्राधान्येन क्रयसाधनत्वम्। अन्यथा विभक्तिभेदवैफल्यात्। किं च 'गवा क्रीणाति' इति गोत्वविशिष्टस्य धर्मिणः साधनत्वेन विहितत्वात् अरुणादिपदस्याप्यारुण्यविशिष्टधर्मिपरत्वे प्राप्तस्य धर्मिणोऽनुवादेऽप्राप्त[4]स्यारुण्यस्य च क्रयसाधनत्वविधौ[5] विध्यनुवादवैषम्यात् गौरवाच्च। एवं चारुण्येनेत्यर्थो वाच्यः एवं च न विशिष्टबोधः। पश्चादप्याकाङ्क्षाविरहात्। किं तु युगपदेव। खलेकपोतन्यायात्। यथा कपोता युगपदेवोड्डीनाः खले निपतन्ति न त्वन्तरा विच्छेदः, तथा सर्वपदार्थानां युगपदेव क्रियान्वयः[6]।

[1]'केचित्' इति पाठः पुस्तकान्तरे।
[2]'अरुणयैकहायन्या पिङ्गाक्ष्या' इति पाठः पुस्तकान्तरे।
[3]न्यायोऽयं (पू० मी० अ०३ पा० ४ सू० २२) स्पष्टः।
[4]'तस्य चारुण्यादेः' इति पाठः पुस्तकान्तरे।
[5]विधौ वैषम्याद्गौरवाच्च' इति पाठः पुस्तकान्तरे।

[6]'न्वयात्' इति पाठः पुस्तकान्तरे।

न तु

**यद्यदादाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते[1]।**

**तेन तेनान्वितः स्वार्थः पदैरवाऽवगम्यते ॥**

इत्युक्तरूपराजमार्गप्रवेशन्यायेनोक्तदोषात्। नन्वेवं वाक्यभेदः स्यादिति चेन्न। अनुपपत्तिबलेनेष्टत्वात्। न च शब्दसाधुत्वार्था विभक्तिः। अर्थसाधुत्वे बाधकाभावात्। अन्यथा गौरवात्। एवं जपादावपि गौणमुख्यभावे विनिगमकाभावात् "गामेकां दशगुद्दद्यात्" इत्यादौ तु न तथा। शुद्धगोदाने दशगुत्वस्याकिञ्चित्करत्वादिति कश्चित्। तदेवमतिपीडनेन लाघवमेव शरणमित्यलमनेन।

छन्दोगपरिशिष्टे –

**अप्युद्धृत्य यथाशक्ति किञ्चिदन्नं यथाविधि।**

**पितृभ्योऽथ मनुष्येभ्यो दद्यादहरहर्द्विजः ॥**

**पितृभ्य इदमित्युक्त्वा स्वधाकारमुदीरयेत्।**

ननु पितृत्वस्य (स्व)परपितृमाधारण्येनातिप्रसङ्गात् स्वपितरित्येव वाच्यम्। "स्वपितृभ्यः" इत्याद्येकवाक्यताबलादिति चेन्न। 'पदपांशुना[2] यूपमनक्ति' 'सप्तमं पदं गृह्णाति' इतिवत् अन्यथा तल्लाभसम्भवात्। तथा हि पदपांशुनाऽञ्जनविधानादत्र कस्य पदिनः पदमित्याकाङ्क्षायां सोमक्रयणार्थोपस्थितनानाद्रव्येष्वरुणाया एव पदिन्याः पदमित्यवगम्यते। प्रकरणात्। तथात्रापि जनकपुरुषत्वं पितृत्वम्। तत्त्वं च जन्यसापेक्षम्।



[1]'प्रपद्यते' इत्यत्र 'प्रयुज्यते' इति पुस्तकान्तरे पाठः।

[2]'पदपांसुनां यूपमक्ति' इति पाठः पुस्तकान्तरे।

इत्यवश्यं तदुपस्थितावाकाङ्क्षादिबलेनान्विताभिधाने यजमानपितृत्वलाभसम्भवात्। न चान्वयप्रकारसम्बन्धाद्युपस्थितिर्विभक्तित एवेति न तद्यतिरेकेण तथा[1] बुद्धिरिति वाच्यम्। विशिष्टस्यैवाध्याहारात्। पिधेहीत्यादौ द्वारादिवत्। तथैवार्थाध्याहारनये सिद्धान्तात्। अन्यथा पदपांशुनेत्यादावपि गत्यभावात्। न च तत्र मानसी तथा[2] बुद्धिः। अत्रापि तुल्यत्वात्। ननु पदत्वादिनापि रूपेण विशेषबुद्धिसम्भवः। घटत्वेन नीलघटवत्। सामान्यपदस्य विशेषपरत्वसम्भवात्। एवं पित्रादिपदेऽपीति चन्न। स्वपितृत्वबुद्धरसम्भवात्। एवं पदपांशुपदेऽपि तुल्यत्वात्। तदेवमतिपीडनेन बुद्धिस्थत्वेनोपस्थितिलाघवमेव शरणमित्यलमनेन।

देवीपुराणे –

**शिव विवर्जयेत्कुन्दमुन्मत्तं च तथा हरेः।**
**देवीनामर्कमन्दारौ सूर्यस्य तगरं तथा॥**

ननु वन[3]दुर्गापूजने मन्दारादीनां विहितत्वाद्विधिनिषेधविरोध इति चेन्न। विशेषवि[4]धानेन सामान्यनिषेधस्य तदितरविशेषपरत्वात्। सामान्यविशेषन्यायात्। विधिनिषेधयाविरोधेनैकवाक्यत्वासम्भवात्[5]। विरोधाभावे सामान्यपदस्य विशेषपरत्वम्। एकवाक्यताबलात्। न च वैपरीत्यम्। विशेषपदस्य

[1]'तथात्वज्ञानमिति' इति पुस्तकान्तरे पाठः।

[2]'तथा बुद्धिः' इत्यत्र 'तबुद्धिः' इति पाठ पुस्तकान्तरे।

[3]'अत्र वनदुर्गा' इति पाठः पुस्तकान्तरे।

[4]'विधाने' इति पाठः पुस्तकान्तरे।



[5]'धयोर्विशेषपरत्वं विनैकवाक्यत्वादेकविरोधात्। एवं' इति पाठः पुस्तकान्तरे। .

सामान्यपरत्वे लक्षणापातात् । समानकर्तृकतदुभयाभिधाने गोबलीवर्दन्यायावतारः[1]। तस्य पौनरुक्त्यमूलकत्वात्। तथा हि "गामानय बलीवर्दं च" इत्यत्र गोपदादेव बलीवर्दस्य लाभे बलीवर्दपदं पुनरुक्तमित्यानर्थक्यप्रसङ्गेन गोपदस्य स्त्रीगवीपरत्वम् । सामान्यविशेषभावे तु न तथा । तस्य विरोधमूलकत्वात्। एवं सामान्यविधौ विशेषनिषेधेऽपि तुल्यमेतत् । इदं त्ववधेयम् । यत्र विशेषस्य सामान्यव्याप्यत्वं तत्रैन विशेषविधिनिषेधबलेन सामान्यस्य तदितरपरत्वम्। निरवकाशत्वात्। सावकाशत्वे सङ्कोचासम्भवादिति न किञ्चिदेतत् । तदेवमतिपीडनेन विरोधे कल्पनालाघवमेव शरणमित्यलमनेन ।

याज्ञवल्क्यः–

**आवाह्य पूर्ववन्मन्त्रैरास्तीर्य च कुशान् शुचीन् ।**
**प्रागग्रेषु सुरान् सम्यग् दक्षिणाग्रेषु वै पितृन् ॥**

नन्वावाहनस्य[2] स्मृतिसन्तानद्वारा दृष्टार्थत्वमिति कश्चित् तन्न। स्मृतेस्तावत्पर्यन्तमनवस्थानात्। अदृष्टार्थत्वावश्यकत्वात्। नन्वस्त्वदृष्टार्थकत्वं दृष्टार्थकत्वमपि स्यादाश्रयिन्यायादिति चेन्न। तथाहि यस्यैकस्यैवोभयरूपत्वं दृष्टार्थत्वमदृष्टार्थत्वं चावच्छेदकभेदेन तदाश्रयित्वं पारिभाषिकम्। स्विष्टकृद्धोमे स्वाहाकारहोमवत् । तत्र दृष्टफलसम्बन्धेऽदृष्टं न कल्प्यते । विलम्बितत्वात्। 'व्रीहीनवहन्ति' इतिवत्। तदभावे चादृष्टार्थत्वम् । एवं च स्वाहाकारयागादौ त्यागत्वावच्छेदेनादृष्टार्थत्वम् ।

---

1 'गोवृषन्या' इति पाठः पुस्तकान्तरे ।



2 'यत्त्वावाहन' इति पुस्तकान्तरे पाठः ।

अङ्गत्वावच्छेदेन दृष्टार्थत्वम्। "अयाडग्निरयाट् सोम" इत्यङ्गमन्त्रेषु वह्नया[1] दिदेवतास्मरणमेव व्यापारः। तत्स्मरणाङ्गकहोमस्यैव फलनिष्पादकत्वात्। यद्वा क्षेपावच्छिन्नत्यागो[2] होमः। त्यक्तस्य प्रतिपत्त्याकाक्षायां क्षेपरूपदृष्टफलकत्वम्। क्षेपस्यादृष्टफलकत्वम्। एवं चावाहनस्य न तथात्वम्। असम्भवात्। तदेवमतिपीडनेन बाधकाभावे दृष्टार्थतालाघवमेव शरणमित्यलमनेन।

मनु :–

**सुरापो ब्रह्महा गोघ्नः कृतघ्नो गुरुतल्पगः।**
**एते पतन्ति सर्वेषु नरकेष्वनुपूर्वशः ॥**

अत्र[3] सुरापादीनां पतनर्कतृत्वाऽवगतौ सुरापानादिविशिष्टस्य तेन सम्बन्धाऽवगमात् तत्र विशेषणस्य सुरापानस्य सति सम्भवे हेतुत्वमवगम्यते। "सप्तदश प्राजापत्यान् पशूनालभेत" इत्यत्र प्रजापत्युदेश्यकत्ववत्। "वारिदस्तृप्तिमाप्नोति" इत्यत्र वारिदानहेतुत्ववत्, विशेषणत्वस्यौत्सर्गिकत्वात्। ननु कथं शाब्दादेवमवगतिरिति चेन्न। शँय्वधिकरणवद्विशेषणत्वेन तथात्वात्। तथाहि शंयुः वृहस्पतिपुत्रः। शं कल्याण युनक्तीति योगात्। "देवा वै शंयुमब्रुवन्। त्वमिह हव्यं वह। यो यत् श्रद्धया ददाति स ते भागः प्रजानां च ते निःश्रेयसं स्यात्" इत्युत्त्वा "यो ब्राह्मणायाऽवगुरेत्तं शतेन यातयात्" इतिश्रुतौ यात-

[1]'ब्रह्मादिदेवता' इति पुस्तकान्तरे पाठः।

[2]'यस्वाक्षेपा' इति पाठः पुस्तकान्तरे।



[3]'अत्र' नास्ति पुस्तकान्तरे।।

नाऽवगोरणयोः पौर्वापर्यबलात् कारणत्वमवगम्यते। विशेषण-त्वेनोपस्थितत्वात्। कारणान्तरस्याश्रुतत्वात, कल्पने गौरवाच्च। एवं शंयोः प्रजानिःश्रेयसहेतुत्वम्। योगार्थस्य विशेषणत्वेनोपस्थितौ कारणाकाङ्क्षापूरणक्षमत्वात्। तदेवमतिपीडनेन लाघवमेव शरणमित्यलमनेन।

मनु :–

**ऋत्विक्पुत्रो गुरुर्भ्राता भागिनेयोऽथ विद्पतिः।**
**एतैरेव हुतं यत्तु तद् हुतं स्वयमेव हि॥**

ननु प्रधाने[1] स्वामी फलयोगात् गुणे प्रतिनिधिः परार्थत्वात्'' इति परिभाषाबलात्। य[2]जमाने न प्रतिनिधिरिति चेन्नेदं[3] दूषणम्। अत्र वाचनिकत्वात्। किं च न य[4]जमाने प्रतिनिधिः अपि तु होमे[5]। तस्य गुणत्वात्। वृषोत्सर्गहोम[6]प्रतिनिधिवत्। ऋत्विग् यागादौ वरणाभरणादिना सम्भृतः। ऋत्विक्त्वाख्यसंस्कारविशेषस्य तत्रैव सम्भवात। पुत्रादिरप्रतिनिधिः[7] निदेशमात्रगोचरत्वात्। पुत्रादेस्तत्राविधानात। अन्यथा ऋत्विग्भेदात्। वस्तुतो यत्र वाचनिकं सामर्थ्यं तत्रानुकल्पः।

**अशिरस्कं भवेत् स्नानं स्नानाऽशक्तौ तु कर्मिणाम्।**

इतिवत्। यत्र त्वसामर्थ्येनोपादानं तत्र प्रतिनिधिः। सोमे[8]

[1]'प्रधान' इति पाठः पुस्तकान्तरे।
[2]'याजमाने' इति पाठः पुस्तकान्तरे।
[3]'रिति चेन्न। नेदं' इति पाठः पुस्तकान्तरे।
[4]'याजमाने' इति पाठः पुस्तकान्तरे।
[5]'किन्तु होमे' इति पाठः पुस्तकान्तरे।
[6]'होमे प्रतिनि' इति पाटः पुस्तकान्तरे।
[7]'पुत्रादिः प्रतिनिधिः' इति पाठः पुस्तकान्तरे।

[8]'सोमपूतीकवत्' इति पाठः पुस्तकान्तरे।

पूतीकवत। अन्यत्र विकल्पः[1]। यव[2]व्रीहिवत्। तत्र पौर्वापर्यबोधकाभावेन परस्परामावस्यावच्छेदकत्वात्। पाठक्रमस्यान्वयेऽतन्त्रत्वात्। ऋत्विज[3]श्चासामर्थ्येनानुपादानादित्यलं विस्तरेण। तत्र ऋत्विक सर्वत्राधिकारी। काम्ये यागादावेव तदुपादानात्। प्रतिनिधिस्तु काम्ये नास्ति। सर्वाङ्गशक्तस्य तत्राऽधिकारात्। पुरोहिते तु वाचनिकम्।

**नित्ये नैमित्तिके काम्ये त्वं मे प्रतिनिधिर्भव।**

इति विशेषाभिधानात्। आरम्भानन्तरमसामर्थ्ये काम्येऽपि तदुपादानम्। नित्यतुल्यत्वात्। नन्वेवं ऋत्विमादीनामुपादाने याजमानिकस्त्यागादिरपि तस्यैव[4] विधेयः इति चेन्न। तेषां स्वत्वाभावेन तदसम्भवात्। एवं मुण्डनादिरप्यसाधारणो धर्मस्तेनैवानुष्ठेयः तस्य संस्कारकत्वात्। ऋत्विगादीनां संस्काराऽनुपदेशात्। फलार्थे त्यक्तहविः क्षेपादावेव तदुपयोगात्। संस्कारार्थत्वफलार्थत्वभेदेन कर्मकलापस्य द्वैविध्यात्। विशेषस्तु चिन्त्यते हविरादौ

**यथोक्तवस्त्वलामे तु ग्राह्यं तदनुकारि यत्।**

**यवानामिव गोधूमा व्रीहीणामिव शालयः॥**

इत्युक्तदिशा तदुपादाने गोधूमस्यापि यवत्वेनैवाऽभिलापः। अवयवानुवृत्तिद्वारा तत्सदृशोपादानमेव विध्यर्थः। यवत्वेन[5] फलसाधनताऽवगमेऽपि यवा[6]दीनामसत्त्वे तद-

[1]'अन्यत्र' इत्यत्र 'नचात्र' इति पाठः पुस्तकान्तरे।।

[2]'व्रीहियववत्' इति पाठः पुस्तकान्तरे।

[3]'स्वतन्त्रत्वात्' इति पाठः पुस्तकान्तरे।

[4]'तस्यैव' इत्यत्र 'तैरेव' इति पाठः पुस्तकान्तरे।

[5]'यवत्वेन साधनताऽवगमोऽपि' इति पाठः पुस्तकान्तरे।



[6]'यवानामसत्त्वे' इति पाठः पुस्तकान्तरे।

वयवविशेषस्यावान्तरजात्यभावात्। सादृश्यविशेषवतामेव विध्यर्थत्वात्। कात्यायनेनापि "शब्देऽविप्रतिपत्तिः" इत्यभिधानात्। "प्रतिनिधिविहिते द्रव्ये श्रुतशब्दः प्रयोज्यः। श्रुत द्रव्यबुद्ध्यैव तदुपादानात्" इतिकर्कव्याख्यानात्। अत एव सोमप्रतिनिधित्वेन पूतीकेषु "सोमं पिबते' इत्यविकृतमन्त्रपाठः। अभावविधौ तु न तथा। तत्र–

**पुष्पाणामप्यभावे तु पत्रैरपि समर्चयेत्।**
**पत्राणामप्यभावे तु फलान्यपि निवेदयेत् ॥**

इत्यादौ तु पत्रत्वादिनैव फलसाधनत्वाऽवगमात्। तद्रव्यबुध्या चाकरणादित्यलं विस्तरेण।

मनु :–

**पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते।**
**वासरस्य तृतीयांशे नाऽतिसन्ध्यासमीपतः ॥**

ननु वासरस्य तृतीयभागे सायाह्नात्मकमुहूर्त्तत्रयस्य सर्वकर्मानर्हत्वात् तदन्यमुहूर्तद्वये श्राद्धपिण्डपितृयज्ञयोरसम्भव[1] इति चेन्न[2]।

**काले कर्म समारब्धमकालेऽपि समापयेत्।**

इत्यारम्भकालनियमोयम्। अभ्युदितेष्ट्यधिकरणस्वरसात्। तथाहि "दर्शपौर्णमासाभ्यां यजेत" इत्यत्र

**पक्षादावेव कुर्वीत तदा पक्षादिकं चरुम्।**

इत्यनेन पक्षादितिथीनामेव दर्शादिकालत्वेनाऽभिधानात्[3]

[1]'श्राद्ध' नास्ति पुस्तकान्तरे।

[2]'न' इति नास्ति पुस्तकान्तरे।



[3]'मेव कालत्व' इति पाठः पुस्तकान्तरे।

पञ्चदश्यां चन्द्रसत्त्वे तदारम्भानधिकारः कालाभावात्। “यस्य निरुप्तं हविः" इत्यादिना तदारम्भे प्रायश्चित्तरूपेष्ट्यन्तरविधानात्। एवं च स्वकाल एवारम्भोऽधिकारापादको[1] न त्वकालेऽपीति। किञ्च "उदिते जुहोति" "अनुदिते जुहोति" "समयाध्युषिते जुहोति" इत्यत्र शाखिभेदेन वैकल्पिकविधौ तदारम्भकाल एव नियम्यते। अन्यथाऽसम्भपात्, कालसौम्यादिति न किञ्चिदेतत्। तदेवमतिपीडनेनारम्भ एव[2] कालाङ्गतालाघवं शरणम्, अङ्गवैगुण्यमेवाऽनधिकारिबीजमित्यलमनेन।

ब्रह्मपुराणे–

**अथ चैत्र्यां वृषोत्सर्गः कार्तिक्यां वा प्रयत्नतः।**
**कर्तव्यस्त्वथ रेवत्यां त्रिभिर्वर्णैर्द्विजातिभिः॥**

ननु 'सम्पूज्य' इत्यादिवचनेन दम्पतिपूजावृपोत्सर्गयोः पौर्वापर्यनियमादत्रापि दम्पतिपूजेति चेन्न। तस्याऽऽशौचद्वितीयाहरूपसन्निहितव्यक्तिविशेषपरत्वात्। 'बृहति स्तूयमाने[3] समुद्रं[4] ध्यायेत् रथन्तरे पृथिवीम्' इत्यादौ यागविशेषसम्बन्धिबृहत्सामजपादेः समुद्रादि[5]ध्यानाङ्गत्ववत्। आग्नेयीन्यायात्। तथाहि- "आग्नेय्याऽऽग्नीध्रमुपतिष्ठते"[6] इत्यत्राऽग्निदेवताका ऋक् आग्नीध्रोपस्थाने[7] विनियुज्यते। वह्निदेवताकानां च बहुत्वादनध्यव-

---

[1]'एवारम्भो न त्वकाले' इति पाठः पुस्तकान्तरे।

[2]'एव' नास्ति पुस्तकान्तरे।

[3]'प्रस्तूयमान' इति पाठः पुस्तकान्तरे।

[4]'समुद्रं मनसा' इति पाठः पुस्तकान्तरे।

[5]'समुद्रध्याना' इति पाठः पुस्तकान्तरे।



[6]'ध्या गाई पत्यमुप' इति पुस्तकान्तरे पाठः।

[7]'गार्हपत्योप' इति पाठः पुस्तकान्तरे।

साये सन्निहिताया एव ऋचो विनियोजनम् । लाघवात् । एतदेव व्यक्तिवचनानां सन्निहितविशेषपरत्वमुच्यते इति । तदेवमतिपाडनेन लाघवमेव शरणमित्यलमनेन ।

वराहपुराणे–

**एकादश्यां निराहारो भूत्वाऽहनि परे ह्यहम् ।**
**भोक्ष्यामि पुण्डरीकाक्ष शरणं त्वं भवाऽच्युत ॥**
**सङ्कल्प्यैवं ततो रात्रौ वासु[1]देवस्य सन्निधौ ।**
**जपेन्नारायणायेति स्वपेदथ विधानतः ॥**

नन्वेवं सङ्कल्प्येत्यभिधानात् दशम्यां वाक्यपाठ एव सङ्कल्प इति चेन्न । तत्र सङ्कल्पपदस्य गौणत्वात् । अन्यथा प्रक्रमाधिकरणविरोधात् । तत्र हि काम्ये कामनाऽमिलापपूर्वकः कुशतिलजलत्यागात्मकः सङ्कल्पः शास्त्रार्थः इत्युक्तम् । मनसा इच्छति, वाचाऽभिलपति, कर्मणा निष्पादयति, इति क्रमवोधनात् । यद्प्येवम् ।

**सामान्य सर्वभूतेभ्यो मयोत्सृष्टमिदं जलम् ।**

इत्यादौ जलाशयोऽयं मयोत्सृष्ट इत्येवं सङ्कल्पः स्यात् । वाक्याऽभिलापकाले उत्सर्गस्येच्छाविशेषस्यातीतत्वेन समवेतार्थत्वाभावात्, इच्छाऽनन्तरमभिलापबोधनात् । प्रत्युत लडर्थस्यैवासमवेतार्थत्वसम्भवात् । एवमेकोद्दिष्टे 'त्वं मयाऽत्र[2] निमन्त्रितः' इत्यादावपि निमन्त्रणस्येच्छाविशेषरूपत्वात् । न चेच्छतीतिपदं फलकामनापरम्, न तु दानादिरूपेच्छापरमिति वा-

[1]'वासु'इत्यत्र 'देव' इति पाठः पुस्तकान्तरे ।
[2]'मया निमन्त्रितः' इति पाठः पुस्तकान्तरे ।

च्यम्। विशिष्टपरत्वे बाधकाऽभावात्। इच्छाऽभिलापनिष्पादनानां सामानाऽधिकरण्यश्रवणात्। निष्पाद्यस्यैवाभिलापात्। तदपि न। मन्त्रपाठानन्तरं हविस्त्यागवदभिलापानन्तरमिच्छाविशेषोपगमात्। सामानाधिकरण्यस्य फलमादाय सम्भवात्। यदपि आदिकर्मणि क्तप्रत्ययः तदपि न लौकिकवाक्ये। लक्षणानिषेधात्। "स्वायत्त" इतिन्यायात्। यथा श्रुतिविहार इत्यस्य देवतापरत्वात्। तद्बोधकं च तद्धितादि।

तदुक्तम्–

**तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन वा पुनः।**
**देवतासङ्गतिस्तत्र दुर्बलं चोत्तरोत्तरम्। इति॥**

तदेवमुपस्थितिक्रमाऽनादरेण क्रमान्तरकल्पने गौरवमित्यतिपीडनेन लाघवमेव शरणमित्यलमनेन।

देवीपुराणे–

**तीर्थे श्राद्धं तु कर्तव्यमर्यावाहनवर्जितम्।**
**श्वध्वाङ्क्षगृद्ध्रकाकानां जुष्टं नैव हतं च यत्॥**

ननु तीर्थे श्राद्धान्तरेऽपि तन्निवृत्तिः स्यात् "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इतिन्यायात्। इति चेन्न।

**प्राप्तैरेव तदा[1]कार्यं कर्तव्यं पितृतर्पणम्।**

इत्यनेन प्राप्तिनिमित्तके तस्मिन् तनिषेधात्। नन्वावाहनस्य सन्निधिहेतुत्वेन "तीर्थे सदा तत्सन्निधिः" इत्येव तत्र मूलमिति चेन्न। तस्याऽदृष्टार्थत्वात्। शारीरस्य बौद्धस्य वा सन्नि-

[1]'तदा' इत्यत्र 'सदा' इति पाठः पुस्तकान्तरे।

धानस्य देवताऽधिकरणे निरस्तत्वात्। तथा हि देशनादर्शितस्य चतुर्थ्यन्तपदनिर्देश्यत्वं देवतात्वं शब्दरूपं शब्दविशिष्टार्थरूपं वा? उभयथाऽप्यचेतनम्। न चाचेतनस्य तत्सम्भवः। नचैवं देवतानामचैतन्ये तिर्यगधिकरणे देवताधिकारनिषेधविरोधः प्रसङ्गाभावादिति वाच्यम्। प्रौढ्या चैतन्यमङ्गीकृत्य तथात्वात्। यदि वा तच्चैतन्यं, तथापि बुद्धिविशेषस्य तेन विनापि सम्भवेन तदर्थत्वाऽभावात्। शारीरस्य नानायागेष्वेकदा सम्भवान्न

किंचिदेतत्।

मनु:-

**व्रतं निशामुखे ग्राह्यं बहिस्तारकदर्शने।**
**सावित्रीमन्त्रहोमश्च कर्त्तव्यः स्वयमन्वहम्॥**

नन्वेतद्वचनबलाद्व्रमात्रे पूर्वदिवसरात्रौ सङ्कल्पाऽऽचरणमिति चेन्न प्रकरणेन तस्य प्रायश्चित्तपरत्वात्। न च तदपेक्षया वाक्यस्य बलवत्त्वमिति वाच्यम्। एवं सति प्रकरणेन वाक्यनियमः क्वापि[1] न स्यात्। वाक्यत्वेनैव बलवत्त्वात्। कथं तदा ज्योतिष्टोमोक्तमुपांशुत्वमन्यत्रान्वेति। पारिभाषिकत्वात्। ननु वराहपुराणे बहुषु व्रतेषु सायंसङ्कल्पाऽभिधानात् मूलकल्पने लाघवं बीजमिति न्यायात्। सर्वस्यैव सायं सङ्कल्पः। गुर्वनुगम[2]नाऽऽचारवत्। तथाहि नानायात्रासु गु-

[1] 'वाक्यस्य नियमनं' इति पुस्तकान्तरे पाठः।

[2] 'गमाऽऽचार' इति पाठः पुस्तकान्तरे।

र्वनुगमाऽभिधाना न्मूलकल्पनालाघवेन यात्रामात्र[1] तदनुगमबोधक श्रुत्यनुमानमिति सिद्धान्तः। यथावा नानाव्रतेष्वेकभु[2]क्ताऽऽभिधानाद्व्रतमात्रे तदङ्गताबोधकवेदाऽनुमानम्। लाघवाद्बाधकाऽभावादिति चेन्न।

राक्षसी नाम सा वेला सर्वकर्मसु गर्हिता।

इति निषेधस्य वचनबलेन परं बाधात्। प्रायश्चित्ते तु तद्बाधेऽप्यन्यत्राऽतथात्वात्। सर्वयात्रासु गुर्वनुगमे न काऽपि हानिरिति 'गुरुरनुगन्तव्यः' इति विधावपि सर्वयात्रासु तद्बोधनस्य शास्त्रार्थत्वादिति न किंचिदेतत्। तदेवमतिपीडनेन लाघवमेव शरणमित्यलमनेन।

कात्यायनः-

"मासिकार्थवद्द्वादशाहं कृत्वा त्रयोदशेऽहनि सपिण्डनं कुर्यात्" ननु क्त्वाबलेन समानकर्तृकत्वलाभात्पञ्चमादिमासाऽनन्तरं मृते ज्येष्ठे श्राद्धलोपः स्यादिति चेन्न। कालाऽऽकाङ्क्षामात्रप्रवृत्तत्वेन कर्त्रैक्यस्याविवक्षितत्वात्। नन्वेवं "सप्तदशाऽवराः सत्रमुपासीरन् य एव यजमानास्त एव ऋत्विजः" इत्यत्र ऋत्विगपचारेऽपि न ऋत्विगन्तरकरणम, कि तु साम्युत्थानम्। अधिकारि[3]लोपात्। अन्यथा तत्राऽपि तथात्वे आसहस्रवर्षं सत्रमुपासीरन्" इतिसहस्रपदं मुख्यमेव स्यादिति चेन्न।

तत्र स्वगतफलकामस्याऽधिकारित्वेन तदभावे तन्निवृत्तेः।

---

[1] 'यात्रामात्रेण' इति पुस्तकान्तरे पाठः।



[2] 'भक्ता' इति पाठः पस्तकान्तरे।

[3] 'रिविलोपात' इति पाठः पुस्तकान्तरे।

अत्र पितृगतफलकामत्वस्य कनिष्ठेऽपि सत्त्वात्। न च सङ्कल्परूपाङ्गबाधान्न तदा चरणम्। अन्यथा वैफल्यादिति वाच्यम्। नित्येष्वङ्गहानावपि फलसिद्धिरिति सर्वशक्तौ निरुक्तत्वात्। किं च प्रधानाऽधिकारिणोऽङ्गेऽधिकारः स च ज्येष्ठस्येति तन्मरणाऽनन्तरं कनिष्ठस्य ज्येष्ठत्वेनाऽधिकारः प्राप्तः। न च तदङ्गाचरणम्। कालाभावात्। इज्यावत्। अत एव प्रणीय' 'परिस्तीर्य' इत्याद्युपक्रम्य 'याजका यजेयुः' इत्यादिना प्रणयनोपक्रमपूर्णहोमपर्यन्तव्यापारकलापस्य समानकर्तृकत्वावगतावपि कर्ममध्ये ऋत्विगपचारे ऋत्विगन्तरकरणेन शेषकर्मनिष्पत्तिरिति लोकशास्त्रसिद्धमेतत्। न चाधिकारिभेदकल्पनागौरवम्। अनन्यगतिकत्वात्। तदेवमधिकारिमरणे तदन्त[1]रकल्पनागौरवात् तदधिकरणेऽतिपीडनेन लाघवमेव शरणमित्यलमनेन।

याज्ञवल्क्यः -

**एकैकस्य तिलैर्मिश्रांस्त्रींस्त्रीन्दद्याजलाञ्जलीन्।**
**यावजीवकृतं पापं तत्क्षणादेव नश्यति।**

नन्विदं कामाधिकारिकम्,अ[2]तः षड्डुरुषतर्पणानन्तरं युज्यताकामाधिकारस्य विलम्बोपस्थितिकत्वात्। फलसापेक्षत्वात्। कामनाविलम्बस्यापि भावात्। नित्याधिकारस्य शीघ्रोपस्थितिकत्वात्। फलनिर पेक्षत्वादिति सिद्धान्तात्। अन्यथा तद्विरोधादिति चेत् न। वाचनिकत्वेन[3]मध्येऽपि तदाचरणात्। न-

[1]'तदनन्तर' इत्यपेक्षणीयम्।

[2]'अत एव' इति पाठः पुस्तकान्तरे।



[3]'तन्मध्ये' इति पाठः पुस्तकान्तरे।

न्वेवं यावज्जीवफलश्रुत्योरन्यतरानुरोधकल्पने फलश्रुत्यनुरोधो युक्तः। कामाधिकारस्य बलवत्त्वात्। अत एव जातेष्टौ पुत्रे जाते’ इत्यत्र पुत्रस्य निमित्तत्वश्रवणेऽपि कामाधिकार उक्तः इति’ समयप्रदीपलिखनविरोध इति चेन्न[1]। भावानवबोधात्। नित्याधिकारस्य शीघ्रोपस्थिति कत्वेऽप्यन्यतराधिकारप्रसक्तौ कामाधिकारस्यैव बलवत्त्वात्। फलबलेन गरीयस्त्वात्। निष्फलात्सफलं गरीय इति न्यायात्। किं च नित्ये प्रवृत्त्यंशेऽपि विधेरवभारो[2] हेत्वन्तराभावात्। काम्ये तु विधिबलेन साधनत्वाऽवगमेऽपि रागादेव प्रवृत्तिसम्भवात्। तदंशे विधेर्भाराभावात्। तदेवमतिपीडनेनोपस्थितिलाघवमेव शरणमित्यलमनेन

आपस्तम्बः -

**सर्वस्वेनापि कर्तव्यं श्राद्धं वै राहुदर्शने।**
**अकुर्वाणस्तु तच्छ्राद्धं पङ्के गौरिव सीदति ॥**

नन्वनेन निन्दार्थवादेनोपरागकालीनश्राद्धादनित्यत्वं युक्तम्। एवं[3]च

**या राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम्।**

इत्यादि[4]फलाऽभिधानं स्तावकमिति चेन्न। संयोगपृथक्त्वेनोभयरूपत्वसम्भवात्। एकस्योभयरूपत्वे संयोगपृथक्त्वं तन्त्रमिति सिद्धान्तात् तथाहि संयोगः सम्बन्धः तस्य पृथक्त्वं नानात्वं तत्सत्वे कर्मणोऽपि नानारूपत्वम्। ’अनन्यथासिद्धोभ-

[1]’चत् भावा’ इति पाठः पुस्तकान्तरे।
[2]’भावो’ इति पाठः पुस्तकान्तरे।
[3]’एवं हि’ इति पुस्तकान्तरे पाठः।

[4]’इत्यभिधानं’ इति पाठः पुस्तकान्तरे।

यबोध[1]कसत्त्वात्। यथा “खादिरो यूपो भवति" इति यूपाङ्गताबोधकः सम्बन्धः, अनन्तरं[2] पुनरपि "खादिरं वीर्यकामस्य" इति श्रुतिवीर्यसाधनत्वं[3] बोधयति। अन्यथा तदुपादानवैयर्थ्यात्। न च नित्येप्येवम्। नित्यताभङ्गप्रसङ्गात्। तेषां तथैव सिद्धान्तात्। न चाङ्गानां फलश्रुतिरर्थवादः"यस्य पर्णमयी जुहूः" इत्यादा विवेति वाच्यम्। तत्र जुहूलाभेऽपि द्रव्यविशेषपरिचायकत्वेन पर्णपदस्य सार्थकत्वात् पापश्लोकमित्यादेरनुवादत्वस्यौचित्यात्। न चात्र तथा। खादिरत्वलाभे पुनः खादिरपदो[4]पादानस्याऽनन्यथासिद्धत्वात्। तदेवमन्यथासिद्धबोधकसत्वे तस्यार्थान्तरादिपरत्वकल्पनागौरवादतिपीडनेन लाघवमेव शरणमित्यलमनेनेन।

मत्स्यपुराणे---

**तस्मादाराध्य गोविन्दमुमापतिविनायकौ।**
**महादानमखं कुर्याद्विप्रैश्चैवानुमोदितः॥**

ननु 'महादानं दद्यात्' इतिविधिबलेन[5]महादानपदं द्रव्यविशेषवाचकम्, अन्यथा दानक्रियाशक्तत्वे दानविधिविरोधात्। एवं च तादृशद्रव्यमेव मुख्यं, फलसाधनं च भवेदिति चेन्न। तत्र महादानपदस्य यौगिकत्वात्।

[1] 'भयरूपत्वबो' इति पाठः पुस्तकान्तरे।
[2] 'पुनरपि' नास्ति पुस्तकान्तरे।
[3] 'श्रुतिः' नास्ति पुस्तकान्तरे।
[4] 'पदेनोपादान' इति पाठः पुस्तकान्तरे।
[5] 'बलात्' इति पाठः पुस्तकान्तरे।

(मध्याह्नस्त्रिमुहूर्तः[1] स्यादपराह्नस्ततः परम्।

इत्यत्र त्रिमुहूर्त इतिवत्) दीयत इति व्युत्पत्तिसम्भवात्। कर्मविशेषे च महादानपदस्य रूढत्वात्। अन्यथा[2] गौण[3]मुख्याधिकरणविरोधात्। तथाहि मुख्यार्थाऽनुपपत्तिमन्तरेण यदुपस्थितं तदेव[4]मुख्यम्। उपस्थितिलाघवात्। तदनुपपत्तिपुरःसरं यदुपस्थितं तद्[5]गौणम्। गङ्गापदस्य पूरतीरादिवत्। अन्यथा तद्विभागाऽसम्भवात्। एवं 'महादानं पश्यत्' इत्यादावनुपपत्तिमन्तरेण कर्मविशेषस्यैवोपस्थितिर्न तु द्रव्यविशेषस्येति तत्पदं कर्मविशेष(६)[6]रूढमेव। उद्भिदादिपदवत्। यत्र तु द्वयोरर्थयोरनुपपत्तिमन्तरणोपस्थितिस्तत्र नानार्थत्वम्। सैन्धवादिपदवत्। अन्यथा तु नानार्थत्वमयुक्तम्। गौरवात्। एवं 'यजमानः प्रस्तरः' इत्यादावपि द्रष्टव्यम्। न च पदान्तरकल्पनेनान्वयबोधः गौरवात्। तथा हि अध्याहारः, शेषः, अनुषङ्ग, आवृत्तिश्चेति तद्भेदाः। तत्राद्ययोरश्रूयमाणपदकल्पनमियान्[7] परं विशेषः। यत्र शाब्दोऽर्थस्तेन विना[8]नान्वयं लभते तत्राध्याहारः। 'पिधेहि' इत्यादौ द्वारमितिवत्। यत्रान्वयसम्भवेऽपि नाभिमतसिद्धिस्तत्र शेषः। 'तावदेवास्य चिरम्' इतिश्रुतौ

[1]'रूढत्वम्' इति पाठः पुस्तकान्तरे।

[2]कंसान्तर्गतो ग्रन्थः पुस्तकान्तरे नास्ति।

[3]'मुख्यन्यायाधिकरण' इति पुस्तकान्तरे पाठः।

[4]'स्थितिस्तदेव' इति पाठः पुस्तकान्तरे।

[5]'स्थितिस्तद्' इति पाठः पुस्तकान्तरे।

[6]'विशेष रूढ' इति पाठः पुस्तकान्तरे।

[7]'पदान्तरकल्पनमियान्परो भेदः' इति पाठः पुस्तकान्तरे।



[8]'विनाऽन्वयं' इति पाठ: पुस्तकान्तरे।

'भोगेन

क्षपयित्वा' इतिवत्। समाप्ते वाक्यार्थे इति यावत्। अन्त्ययोस्तु श्रुतस्यैव शब्दस्य सम्बन्धः। तत्र व्यवहितेन पुनः सम्बन्धोऽनुषङ्गः।

**मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णस्ततः परम्।**

इत्यत्र त्रिमुहूर्त इतिवत्। सन्निहिते चावृत्तिः 'गामश्वं च पश्य' इति वत्। शेषोऽध्याहार एव, अनुषङ्ग आवृतिः, इति द्वावेव भेदावित्यपि[1] कश्चित्। इदं त्ववध्येयम्- रूढ्यर्थयोगार्थयोरुभयोर्मुख्यत्वेऽपि रूढ्यर्थस्य बलवत्त्वम्। शीघ्रोपस्थितिकेन तेनैवेतरपदार्थान्वयात्। योगार्थस्य योगादिज्ञानसापेक्षत्वेन विलम्बितत्वात्। योगरूढेश्च ततोऽपि बलवत्त्वम्। परस्परसा[2]काङ्क्षत्वेन समानपदोपात्तयोस्तयोः प्रथममेवान्वयबोधसम्भवात्। तन्निमित्तं रूढेर्योगापहारकत्वं,व्याक्तिवचनानां सन्निहितपरत्वं, वेत्यन्यदेतत्। तच्च क्वचिद्योगस्यातिप्रसङ्गे पङ्कजपदवत्। क्वचिद्रूढ्यर्थस्य तैलादिपदवत्। उभयत्र बीजसाम्यात्। क्वचित्तु प्रकरणादिबलेन योगार्थस्यैव बलवस्वम्। यथा-"अग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिवरुण आदित्यैर्बृहस्पतिर्विश्वेदेवैः' इत्यत्र विश्वे देवपदस्य विश्वेपदवत्,,गणशक्तत्वेऽपि अग्न्यादिसकलपरत्वम्। प्रकरणात्तेषामेवोपस्थितिसम्भवात्। तत्र तस्य तदितरोपस्थितिप्रतिबन्धकत्वमिति तत्सिद्धान्तात्। पङ्कजपदादौ

[1]विति कश्चित्' इति पाठः पुस्तकान्तरे।



[2]'सापेक्षत्वेन' इति पाठः पुस्तकान्तरे।

कुमुदतात्पर्यावगमे शक्त्यैवान्वयबोधो लक्षणया वेत्यन्यत्र विस्तरः।

दानं च स्वस्वत्वनिवृत्तिपरस्वत्वोत्पत्तिफलकेच्छाविशेषः।फलस्य विशेषणत्वं, उपलक्षणत्वं वेत्यन्यदेतत्। तदेव च पुरुषसूक्तजपाङ्गक महादानम। सचेच्छाविशेषः सम्प्रदानस्वीकारेणापपद्यते। तस्य तत्कारकत्वेन तदनुमतेरेव व्यापारत्वात्। तदुत्तरकालीनस्वीकारश्च स्वत्वोत्पत्तिकारणम्। एवं च नासतो दानम्। स्वत्वध्वंसतदुत्पत्योरसम्भवात्। नन्विच्छाविशेषानन्तरं यदा द्रव्यसमवधानं, तदा तसो विद्यमाने[1]ऽप्यविद्यमानेन परस्वत्वोत्पत्त्यसम्भवेनादृष्टद्वारत्वस्य तवाप्यावश्यकत्वादिति चेन्न। तथाप्युत्तरप्रतिपत्तेः स्वत्त्वोत्पादकत्वेन तत्रादृष्टद्वारत्वे मानाभावात्। न च प्रतिपत्तिरपि द्रव्यसम्पत्त्यनन्तरमिति वाच्यम्। अस्तु, तथापि परस्वत्वोत्पत्तौ स्वस्वत्वध्वंसस्यैव व्यापारत्वं लाघवात्। स्वीकारमन्तरेणेच्छाविशेषश्चोत्सर्गः। वृषोत्सर्गादेः सर्वसिद्धत्वात्। तत्र ददे' इत्यभिलापश्च। तत्रापि ददानिर्मुख्य इति भट्टमताऽनुसारात्। वस्तुतः 'समुत्सृजे' इत्येवाभिलापः। बाधकाभावात्। तदुत्तरप्रतिपत्तरेव दानाङ्गत्वम्। तावतैव च कारकत्वम्। तत्रैव दानपदं मुख्यमिति गुरुमतवेदिनः। स एव देवतोद्देश्यको यागः। स एव क्षेपावच्छिन्नो होमः। वृषात्सर्गादौ च यागपदं गौणम्। देवतोद्देश्यकत्वाभावात्।

[1] 'तद्दशे विद्यमाने व्यवधानेन' इति पाठः पुस्तकान्तरे।

सर्वसत्वानामुद्देश्यत्वात्। वृषोत्सर्गे चोद्देश्याभावात्। ननु यागोऽपि दानम्, दे. बनानामतिविदुषीणां स्वीकारसम्भवादिति चेन्न। तत्सम्भवेऽपि तदुत्पाद मानाभावात्। इदं तु चिन्त्यते। बुद्धिविशेष एव दानादिकमस्तु प्रथमोपस्थितत्वात्। अनागतगोचरत्वस्योभयथाऽऽवश्यकत्वात् इति चेन्न मीमांसाकानामनागतगोचरज्ञानासम्भवेनेच्छानुसरणात्। किंच 'इदं न मम' इति न तदाकारः। तभ्रमोच्छेदापातात्। तत्स्वत्वे[1]स्वत्वाभावस्यावश्यकत्वात् इति। न ममेदमस्तु इत्याकारो वाच्यः तथा चेच्छापरूत्वस्यैव स्फुरत्वात्। तदेवमतिपीडनेनानन्यथासिद्धमुपस्थितिलाघवं शक्यार्थोपादाने शरणमित्यलमनेन।

मत्स्यपुराणे---

**श्रीकामः शान्तिकामो वा ग्रहहोम समाचरेत्।**
**वृष्ट्यायुःपुष्टिकामो वा तथैवाऽभिचरन्नपि।**

ननु ग्रहेतिविशेषोपादानात् तेषामेव नवानां होमो न त्वधिदेवतादीनामपि। प्रापकाभावात्, विशेषाभिधानाच्चेति चेन्न। 'यो यद्भक्त' इतिन्यायेन तेषामपि लाभात्। तथा हि यो यद्भक्तो यत्परिवाररूपः स तद्ग्रहे[2]णैव गृह्यते तदुपादानार्थं पृथक्प्रयत्नवैफल्यात्। मुख्याऽन्वये परिवारान्वयस्याप्यावश्यकत्वात्[3]। साङ्गस्यैव तस्य विधिगोचरत्वात्। न चैवं परिवारान्तराणामपि

[1]'तत्सत्वे' इति पाठः पुस्तकान्तरे।
[2]'तद्ग्रहणेनैव' इति पाठः पुस्तकान्तरे।

[3]'परिवारस्याऽप्यन्वयात्' इति पाठः पुस्तकान्तरे।

लाभः स्यादिति वाच्यम्। या[1]गान्तरे स्थानान्तरे तासामेव तत्त्वेनोपादानात्[2]। तदेवमतिपीडनेन विधिलाघवमेव शरणमित्यलमनेन।

देवीपुराणे -

**तत्राऽपि महती पूजा कर्तव्या पितृदैवते।**
**ऋक्षे पिण्डप्रदानं तु ज्येष्टपुत्री विवर्जयेत्॥**

ननु पिण्डदानरूपाङ्गनिषेधात् तन्मुखेन श्राद्धस्यैव निषेधः, अङ्गहीनस्य प्रधानस्याकिञ्चित्करत्वात्। "साङ्गाद्वैदिकात्" इति सिद्धान्तादिति चेन्न। वाचनिकतदङ्गहानावपि मुख्यस्यातथात्वात्। 'गुणलोपे न मुख्यस्य' इतिन्यायात्। तथा हि गुणस्याङ्गस्य वचनबलान्निरसनेऽपि मुख्यनिरासहेतोरभावात्[3] तत्र तदङ्गत्वस्यापि वचनेन सम्भवात्[4]। एव[5] मङ्गित्वस्याप्यविकलत्वात्। अन्यथा 'श्राद्धं विवर्जयेत्' इत्यभिधानप्रसङ्गात्। न चैवमङ्गमुखेन प्रधानविधिरपि न स्यादिति वाच्यम्। तत्र प्रधानेऽपि प्रापकान्तराभावेन तथात्वात्। फलचमसवत्। तत्प्राप्तेश्चा[6]वश्यकत्वादिति वैषम्यात्। प्रकृते प्रधाननिषधपरत्वे गौरवात्। क्वचित्त्वङ्गनिषेधेन प्रधानबाधोऽप्यविद्यत्वेन[7] यागनिषधादिवत्। 'न स्त्री जुहुयान्न निर्वपेत्' इत्यादिस्वरसात्। तदे-

[1]'योगान्तरं' इति पाठः पुस्तकान्तरे।
[2]'व समत' इति पाठः पुस्तकान्तरे।
[3]'न मुख्यस्य निरा' इति पुस्तकान्तरे पाठः।
[4]'तदनङ्गस्याऽपि तद्बलेन सम्भवात्' इति पाठः पुस्तकान्तरे।
[5]'एवं साङ्गत्वस्थाऽप्यविकलत्वात्' इति पाठः पुस्तकान्तरे।
[6]'तत्प्राप्तेरप्यावश्यकत्वात्' इति पुस्तकान्तरे पाठः।

[7]'अविद्यत्वे याग' इति पाठः पुस्तकान्तरे।

वमतिपीडनेन लाघवमेव शरणमित्यलमनेन ।

मनु :–

**सकृत्तु कृतसंस्काराः सीमन्तेन द्विजस्त्रियः ।**
**यं यं गर्भं प्रसूयन्ते स गर्भः संस्कृतो भवेत् ॥**

सीमन्तस्य विशिष्याऽभिधानात् पुंसवनादावावृत्तिरिति कश्चित् तन्न । स्त्रीसंस्कारद्वारा पुत्रसंस्कारक[1]त्वाविशेषात् । स्त्रीसंस्कारस्य प्रथमगर्भेणैव कृतत्वात् । स्मृतौ न्यायमूलत्वे[2] सम्भवति मूलान्तरकाल्पने गौरवात् ।

**सकृत्तु संस्कृता नारी सर्वगर्भेषु संस्कृता ।**

इतिस्मृतिरपि न्यायमूलत्वात्[3] आरम्भणीयेष्टिवत् । तथा हि "आ. नाव[4]ष्णवमेकादशकपालं निर्वपेद्दर्शपौर्णमालावारिसमानः" इत्यनेन विहिताया आरम्भणीयेप्रधिकारसम्पादकत्वात् सकदेव तयोरादौ तदनुष्ठानम् । तावतैवाधिकारनिष्पादनात्, आवृत्तौ मानाभावात् । त. देवमतिपीडनेन लाघवमेव शरणमित्यलमनेन ।

ब्रह्मपुराणे –

**निरुप्य चतुरः पिण्डान् श्राद्धदः पितृनामतः ।**
**येसमाना इतिद्वाम्यामाद्यं तु विभजेत्रिधा ॥**
**एष एव विधिः पूर्वमर्घपात्रचतुष्टये ।**

ननु पिण्डार्थं केऽन्नादौ दैवान्नटे पिण्डमेलनस्यासिद्धत्वात्

[1]'संस्कारत्वा' इति पाठः पुस्तकान्तरे ।
[2]'स्मृतोयमूलत्वे' इति पाठः पुस्तकान्तरे ।
[3]'स्मृतेरपि न्या' इति पाठः पुस्तकान्तरे ।

[4]'अग्नाच' इति पाठः पुस्तकान्तरे ।

पुनः पाकारम्भ इति चेन्न । अङ्गस्यानुष्ठाना[1]प्रयोजकत्वात्, प्रधानार्थैमनुष्ठितानामेवाङ्गार्थत्वात्, तदनुष्ठानबोधकान्तरकल्पने गौरवात्, यत्किञ्चिदहानेऽपि कर्मनिर्वाहात् । वाजिनाऽपचारवत् । तथा हि "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्" इत्यत्रामिक्षाया उत्पत्तिशिष्टत्वेन विश्वे देवदेवताकत्वेऽवगते[2] यत्नसिद्धस्य वाजिनस्यापि क्व नाश्यतां क्व दष्यतामित्यपेक्षायां विश्वेदेव[3]देवताकत्वं बोध्यते, तत्र कथं चिद्वाजिनाऽपचारे वाजिनहोमं विनैव यागसिद्धिः । नतु वाजिनान्तरारम्भः[4]। क्व नाश्यतामित्याद्या[5]काङ्क्षानिरस्यत्वात् विश्वेदेवहोमस्यामिक्षयैव निष्पन्नत्वात् । न चाङ्गवैगुण्यम् । तत्र तस्याऽनङ्गत्वात् । तदङ्गमन्तरेणापि वा तन्निष्पत्तेरनन्यगतिकत्वात् । क्वचित्पुनरनुष्ठानमपि अत्यन्तसंयोगश्रुतिबलेनावश्यकत्वावगमात् । पुष्करिण्यादौ चतुरहव्यापिनि होमे समिदपचारे समिदन्तरकरणवत् । न चात्रापि

**सहपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः ।**

इत्यादिस्वरसान्मेलनमावश्यकमिति वाच्यम् । श्राद्धावश्यकतापरत्वात् । तत्त्वेऽपि वा श्राद्धान्तरे[6] पुनरनुष्ठानस्याऽवश्यकत्वात् । तदेवमतिपीडनेन लाघवमेव शरणमित्यलमनेन ।

विष्णुः -

"कार्तिक्यामपूपान्दत्वा वृषमुत्सृजेत्"। ननु त्त्वाबलेन पूर्व-

[1]'नुष्ठानप्रयो' इति पाठः पुस्तकान्तरे ।

[2]'विश्वदेव' इति पाठः पुस्तकान्तरे ।

[3]'विश्वदेव' इति पाठः पुस्तकान्तरे ।

[4]'वाजिनान्तरापातः' इति पाठः पुस्तकान्तरे ।



[5]'मित्याकालाया निरास्तत्वात्' इति पाठः पुस्तकान्तरे ।

[6]तदननुष्ठान इति पाठः पुस्तकान्तरे ।

कालतावगमे[1]ऽपि कथं कालाध्यवसाय इति चेन्न। आनन्तर्य-वाचिकाबलेन ब्रह्मवरणाव्यवधानेनैव तत्कर्त्तव्यताऽवगमात्। आश्विनग्रहग्रहणवत्। तथाहि "आश्विनं ग्रहं गृहीत्वा सवनीयं पशुमुपाकरोति" इति श्रुतेः। "सह पशुनालभेत"[2] इति तत्रैव श्रवणाच्च। अग्नीषोमीयसवनीयानुयन्ध्यानां सहाऽऽलम्भे[3] प्राप्ते यदि तेषां यथापठितानांसहालम्भः क्रियते तदाऽऽश्विनग्रहग्रहणसवनीयपशूपाकरणयोरानन्तर्यभङ्गः स्यात्। तथा च तत्रोभयानुरोधात् आदावाश्विनग्रहणं, ततः सवनीयपशूपाकरणम्, शेषेऽग्नीषोमीयानुबन्ध्यपशुपाकरणमिति सिद्धान्तः। एवमाम्युदयिकानन्तरमेवाऽपूपदानम्। न च श्राद्धानन्तरं दाननिषेधः दत्त्वेत्यनेन दानस्याध्यवधानलाभेनाऽनन्यगतिकत्वात्। न च वरणादिव्यवधानं तथापीति वाच्यम्। तस्य ऋत्विक्त्वाख्यसंस्कारजनकत्वेन वृषोत्सर्गान्तर्गतत्वात्। श्राद्धस्याङ्गत्वेन भिन्नत्वात्। अन्यथाऽपूपदानादेरङ्गस्य प्रधानकालान्यकालकल्पनागौरवात्। तदेवमतिपीडनेन लाघवमेव शरणमित्यलमनेन।

मत्स्यपुराणे -

**मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः।**
**अयातयामास्तेदर्भा विनियोज्याः पुनः पुनः।।**

नन्वेवं नभसि मासेऽमावास्यासञ्चितेषु[4] कुशेष्वयातयाम-

[1] 'अपि' नास्ति पुस्तकान्तरे।

[2] 'लभते' इति पाठः पुस्तकान्तरे।

[3] 'नां पशूनां सहालम्भने' इति पाठः पुस्तकान्तरे।

[4] 'मास्यमावास्या' इति पाठः पुस्तकान्तरे।

त्व[1]नियमनान्मासान्तरे तिथ्यन्तरेऽप्ययातयामत्वं प्रसक्तमिति चेन्न ।

**समित्पुष्पकुशादीनां स कालः समुदाहृतः ।**

इत्यनेन प्रत्यहं कुशाऽऽहरणविधानात् मासान्तरे तिथ्यन्तरे वा कुशसञ्चयस्य तदयातयामत्वस्य वा बोधकाऽभावात् । न चाऽनुष्ठानसौकार्य्यार्थमेव सञ्चयः । प्रत्यहं कुशाहरणविधिविरोधात् । नापि[2] तेषामयातयामत्वम् । विनियुक्तविनियोगविरोधात् । विशेषविधिं विना विनियुक्तस्य पुनर्विनियोगे आकाङ्क्षाविरहात् । विधेश्चरितार्थस्वात् । बहिर्यागादिवत् । आकाक्षान्तरकल्पने गौरवात् । तदेवमतिपीडनेन लाघवमेव शरणमित्यलमनेन ।

गोभिलः -

"नात्रोसल्मुकनिधानं, नाञ्जनाभ्यञ्जने, न स्वस्तरः, न सुरभिः । निह्नवनं, उदपात्रान्तो वासस्तु[3] निदध्यात्" सुरभि[4]श्चन्दनादिः

'तगरं पिनष्टि'[5] इत्यादिना प्रकृतौ तगरपदेन[6] तदभिधानात् । निह्नवतं "नमो व" इतिमन्त्रपाठः । तदेवमन्वष्टकायां प्रकृतौ 'पत्नी बर्हिषि शिलां निधाय तगरं पिनष्टि' इत्यादिकमु-

[1] 'दर्भेष्वयातयामत्व' इति पाठः पुस्तकान्तरे ।।

[2] 'विरोधात् । अयातयामत्वबोधनात् । अन्यत्र यातयामत्वविशेषणस्य व्यावर्तकत्वदित्यर्थेन तिथ्यादिविशेषविधि' इति पाठः पुस्तकान्तरे ।

[3] 'न प्रस्तरो न सुरभि निह्नवनं, तदपा' इति पाठःपुस्तकान्तरे ।

[4] 'सुरभि चन्दनं' इति पाठः पुस्तकान्तरे ।



[5] 'स्तगरं पिनष्टि' इति पाठः पुस्तकान्तरे ।

[6] 'स्तगरपदेन' इति पाटः पुस्तकान्तरे ।

त्त्वा तद्विकृतौ पिण्डपितृयज्ञे उल्मुकनिधानादिकं व्युदस्तं तद्विकृतिभूतं च पार्वणं "पिण्डपितृयज्ञवदुपचारः" इति पार्वणेऽभिधानात् इति[1] तेन तत्रापि नोल्मुकनिधानादिकम्। अतिदेशबलात्। ननु ब्रह्मपुराणे उपदेशाददतिदेशबाध इति चेत् न। बाधवैषम्यभयेन उपदेशाददतिदेशस्य शाखान्तरगोचरत्वात्, विधिनिषेधयोरेकत्र जघन्यत्वात्। "नार्षेयं वृणीते" इतिवत्। तथाहि महापितृयजज्ञेऽतिदेशप्राप्ते धर्मजाते "न होतारं वृणीते नार्षेयं वृणीते" इति श्रुतम्। तत्र नात्यन्तं वरणस्य विधिनिषेधौ। विकल्पप्रसङ्गात्। एवं पर्युदासेन[2] होतृव्यतिरिक्तमङ्गजातमतिदिश्यते। अन्यथा वाक्यभेदापातात्। "नानुयाजेषु" इतिवत्। नन्वेवमपि नोल्मुक निधानमित्यादिनोल्मुकनिधानाभावस्य नाङ्गत्वबोधनम्। अपितु उलमुकातिदेशः पर्युदस्यते। तस्मात्तदन्यधर्मातिदेशः सिद्ध्यति। एवं चोल्मुकनिधानाद्यभावस्यानङ्गत्वान्न पार्वणे तदतिदेश इति कथं ब्रह्मपुराणीयोपदेशेन समं विरोधशङ्कापीति चेन्न। तथाऽपि पिण्डपितृयज्ञवदित्यः विशेषिततुल्यता[3] भिधानविरोधेनोल्मुकनिधानायोगात्, साधारणा[4]भिधानसङ्कोचकल्पने[5] च गौरवात्। तदेवमतिपीडनेन लाघवमेव शरणमित्यलमनेन।

याज्ञवल्क्यः-

[1]'इति' नास्ति पुस्तकान्तरे।

[2]'पर्युदासे प्राप्त होतृवरणादिव्यति' इति पाठः पुस्तकान्तरे।

[3]'तुल्यताविधान' इति पाठः पुस्तकान्तरे।

[4]'साधारणविधान' इति पाठः पुस्तकान्तरे।



[5]'च' नस्ति पुस्तकान्तरे।

**आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा ।**
**महागणपतेश्चैव कुर्वन् सिद्धिमवाप्नुयात् ॥**

स्वामिनः कार्तिकेयस्य । महागणपतेरिति महापदं प्रशंसापरम् । महाभारतवत् । वस्तुतस्त्विन्द्रभिन्नमहेन्द्रवत् महागणपतिदेवतान्तरमेव । स्तुतशस्त्रनयात्[1] । स्तुतं स्तोत्रं शस्त्रं प्रशंसा 'शंसुस्तुतौ'इतिधात्वनुः सारात् । तद्यथा 'इन्द्रं स्तुवीत' इतिविधौ स्तुतिस्तावदगम्यते स्तुतिश्च

स्तुत्यनिष्ठा, लिङ्गात् । एवं च स्तुत्यस्याविशषणेन्द्र एव पर्युदस्यति स्तुतिज्ञांन, न तु सन्निहितमहेन्द्रान्वयः । तस्य महत्त्वाश्रयत्वेन भेदात् । ततः स्तुत्येन्द्रसम्बन्धिकार्यजिज्ञासायामुपस्थितेन्द्रग्रहनामकयागान्वयः ।

गजेन्द्रमहेन्द्रयोरभेदः, शब्दाभेदादिति वाच्यम् । तदभेदेऽपि रूपभेदाभ्यां रूपिभेदात् । घटपटयोस्तथा दर्शनात् । न चात्र तदभावः । इन्द्रावधिकमहत्त्वस्येन्द्र एवासम्भवेऽपि तदावश्यकत्वात् । "रथघोषेण महेन्द्र[2]स्तुतिमुपाकरोति" इति वाजपेये महेन्द्रस्तुतरेपि श्रवणात् । देवीपुराणे—

**अकालेऽप्यथ वा काले तीर्थश्राद्धं तु मानवैः ।**
**प्राप्तैरेव सदा कार्यं कर्त्तव्यं पितृतर्पणम् ॥**

ननु पूर्वदिवसे[3] निरामिप्रसकृद्भोजनादिरूपाङ्गबाधात् कथं तदनुष्ठानम् ? न च तदपि पूर्वदिने कर्तव्यामिति[4] वाच्यम् । प्रधा-

---

[1]'स्तुतशस्त्रन्यायात्' इति पाठः पुस्तकान्तरे ।

[2]'महेन्द्रस्य स्तोत्रमुपा' इति पाठ : पुस्तकान्तरे ।



[3]'पूर्वदिने' इति पाठः पुस्तकान्तरे ।

[4]'कर्तव्यमेवेति' इति पाठः पुस्तकान्तरे ।

नकर्तव्यतानिश्चयाऽभावेनाङ्गेऽनधिकारादिति चेन्न। स्फ्याश्लिष्टे ज्यावत्सम्भवात्। तथाहि यत् स्फ्य आश्लिषेत्तदधोऽपमृज्याद्विष्णवे उरुक्रमायद्वादशकपालं निर्वपेत्" इत्यनेन विहितेष्टौ प्रकृतिवद्विकृतिरित्यतिदेशेन दर्शात्मकप्रकृतिधर्माणां प्राप्तौ पूर्वदिनप्रातःकालीनहवनीयदेवतावाहनमपि प्राप्तम्। तच्च तदा न विधीयत। श्वोभाविस्पचाश्लेषसन्देहात्[1], नैमित्तिके निमित्तनिश्चयवतोऽधिकारात्, प्रधानाऽनधिकारेचाङ्गेऽप्यनधिकारात्। तदुत्तरदिने[2] प्रधानाधिकारेऽपि न तदनुष्ठानम्। पूर्वदिनस्याङ्गस्य बाधात्। इतीज्यायामावाहनं विनैवानुष्ठानम्, तद्वदत्रापि सम्भवात्। न चाऽङ्गबाधाऽपेक्षयाङ्गाङ्गबाध एव युक्त इति वाच्यम्। अङ्गशून्यस्याङ्गस्याकिञ्चित्करत्वेनायासगौरवात्। कश्चित्तु तादृशयागे तदावाहनस्याङ्गत्वमेव नास्ति, अत एव ज्योतिःशास्त्रादिना तदवगमेऽपि तदनुष्टानं नेत्युक्तवान्। तदेवमतिपीडनेन लाघवमेव शरणमित्यलमनेन।

ब्रह्मपुराणे--

**नित्यं नैमित्तिक काम्यं त्रिविध स्नानमिष्यते।**
**तर्पणं तु भवेत्तस्य अङ्गत्वेन प्रकीर्तितम्॥**

काम्यं तीर्थस्नानादि। यत्तु काम्यं पुष्यस्नानादि तन्न। 'नालौकिकं लौकिकाङ्गम्' इतितक्षसूत्रविरोधात्। तक्षा वर्द्धकिः। उद्घाटनाविवेचकं सूत्रं तक्षसूत्रम् अङ्गं कारणभेदः। अलौकिकमनपेक्षितोपकारजनकमिति शेषः। तद्यथा "आरे भग्न इन्द्रबाहु-

[1] 'स्फयाऽऽश्लेषसन्देहे' इति पाठः पुस्तकान्तरे।

[2] 'उत्तरदिने' इति पाठः पुस्तकान्तरे।

र्वद्धव्यः पायसं ब्राह्मणो भोजयितव्यः" इत्यत्र रथादाविन्द्रवाहबन्धनादिकमलौकिकमनङ्गम्। तज्जन्यादृष्टं विनापि तत्सम्भवात्, तद्धेतुत्वकल्पनागौरवात्। किं तु नैमित्तिकम्। तद्वत् तर्पणमपि लौकिकस्नानानङ्गम्। अनपेक्षितादृष्टजनकत्वात्। तदेवमतिपीडनेन[1] लाघवमेव शरणमित्यलमनेन। तदेवम् -

**रत्नाकरे कल्पतरौ श्रीदत्तहरिनाथयोः।**
**वाचस्पतौ निगूढं यत्तन्यंबन्धि गुरुक्रमात् ॥**
**हर[2]चरणरजस्वी बालभावे यशस्वी**
**तरुणिमनि तपस्वी सर्वकाले मनस्वी।**
**या विविदिषति बुधेऽयं दीपयामास तस्मिन्**
**अधिकरणकदम्बैः कौमुदी देवनाथः।।**
**सोमभट्टोपदिष्टेन पथा[3] संसरतोऽधुना[4]।**
**मीमांसाविषमारण्ये शरणं मम भारती ॥**

इति महामहोपाध्यायतर्कपञ्चाननठक्कुरश्रीदेवनाथकृताऽधिकरणकौमुदी समाप्ता ॥

[1]'लौकिकस्नानाङ्गमनपे' इति पाठः पुस्तकान्तरे।
[2]'हरिचरण' इति पाठ पुस्तकान्तरे।

[3]'सोमाभट्टो' 'स्वामिभट्टो' इति च पुस्तकान्तरे पाठः।
[4]'संसरतो' इत्यत्र 'सञ्चरतो' इति पाठः पुस्तकान्तरे।